ख्यातं राष्ट्रियसंस्कृतं सुमहितं संस्थानमद्याखिलं
वाणीवैभवमातनोति नितरां राष्ट्रे चतुर्दिग्भवम् ।
तत्रासौ निजगौरवेण महता सारस्वतं भासयन्
सोमय्याभुवि भासते परिसरो विद्याविहारे स्थितः ।।



शिक्षाशास्त्रविभागः
राष्ट्रियसंस्कृतसंस्थानम्
(मानितविश्वविद्यालयः)
क.जे. सोमैयासंस्कृतविद्यापीठम्
विद्याविहारः, मुम्बई - 77

शिक्षारश्मिः 2018-19

षष्ठोऽङ्कः, 2018–19

ISSN 2395-7921

# शिक्षारश्मिः

समीक्षिता मूल्याङ्किता च वार्षिकशोधपत्रिका
A Peer Reviewed Refereed Annual Research Journal

प्रधानसम्पादकः
प्रो. सुदेशकुमारशर्म्मा

सम्पादकः
डा. देवदत्तसरोदे



शिक्षाशास्त्रविभागः
राष्ट्रियसंस्कृतसंस्थानम्
(मानितविश्वविद्यालयः)
क.जे. सोमैयासंस्कृतविद्यापीठम्
विद्याविहारः, मुम्बई - 77

Peer Reviewed Refereed Journal ISSN : 2395-7921

# शिक्षारश्मिः

## शिक्षाशास्त्रविभागीयवार्षिकशोधपत्रिका

## Annual Research Journal of Department of Education

(समीक्षिता मूल्याङ्किता च शोधपत्रिका)

## 2018 - 19

ख्यातं राष्ट्रियसंस्कृतं सुमहितं संस्थानमद्याखिलं
वाणीवैभवमातनोति नितरां राष्ट्रे चतुर्दिग्भवम्।
तत्रासौ निजगौरवेण महता सारस्वतं भासयन्
सोमय्याभुवि भासते परिसरो विद्याविहारे स्थितः।।






राष्ट्रियसंस्कृतसंस्थानम्
भारतसर्वकारस्य मानवसंसाधनविकासमन्त्रालयाधीनम्
(मानितविश्वविद्यालयः)
क. जे. सोमैयासंस्कृतविद्यापीठम्
विद्याविहारः (पूर्वम्) मुम्बई - 400077

पत्त्रिकानाम : शिक्षारश्मिः (शिक्षाशास्त्रविभागीयवार्षिकशोधपत्त्रिका)
प्रकाशकः : शिक्षाशास्त्रविभागः, राष्ट्रियसंस्कृतसंस्थानम् ( मा. वि.), मुम्बई - 77

**ISSN : 2395-7921**


प्रकाशनवर्षम् : 2019
अनुकृतयः : 200
मुखचित्रविन्यासः : **डॉ. जितेन्द्रकुमाररायगुरुः**

मुद्रणम् : **RANK PRINTERS, MULUND (W), MUMBAI**

प्रो. पी.एन्. शास्त्री
कुलपति
राष्ट्रिय संस्कृत संस्थान
मानित विश्वविद्यालय
(मानव संसाधन विकास मंत्रालय, भारत सरकार के अधीन)
('ए' ग्रेड के साथ राष्ट्रीय मूल्यांकन एवं प्रत्यायन परिषद् द्वारा मान्यता प्राप्त)



Prof. P.N. Shastry
Vice-Chancellor
RASHTRIYA SANSKRIT SANSTHAN
Deemed to be University
(Under MHRD, Govt. of India)
(Accredited by NAAC with 'A' Grade)

RSKS/VC-101/2019-20/06
Dated- 15/04/2019

## मङ्गलशंसनम्

**आ नो भद्राः क्रतवो यन्तु विश्वतः** । ऋग्वेदः

सर्वाभ्यः आशाभ्यः ज्ञानविचाराः आयान्तु इति वेदवचनं ब्रूते। ब्रह्मणः अपररूपं भवति ज्ञानं तथा च उपनिषद्वचनं **सत्यं ज्ञानम् अनन्तं ब्रह्म** इति। वेदो हि नाम ज्ञानं यतो हि वेदपदस्य विद - ज्ञाने अस्माद् धातोः निष्पन्नत्वात् अस्यैव अपरनामधेयं ब्रह्म इति। वेदविविदिषया, ब्रह्मजिज्ञासया च यद्व्रतम् आचर्यते तद् ब्रह्मचर्यम्। ब्रह्मचारी ब्रह्मणि चरति वेदे परमात्मनि वा रमते ऐहिकामुष्मिकफलञ्चाधिगच्छति।

मानवजीवनस्य परमलक्ष्यम् अनया वेदविद्यया एव सम्पाद्यते इति हेतोः संस्कृतशास्त्रेषु विद्यमानानां नानाविद्यानां संरक्षणसंवर्धननिमित्तमध्ययनाध्यापनानुसन्धानप्रकाशनादिनानाक्रियाकलापैः लोकमुपकुर्वद् विलसति राष्ट्रियसंस्कृतसंस्थानम्। संस्थानपरिसरेष्वन्यतमपरिसरः मुम्बईमहानगरे विद्यते । परिसरस्थशिक्षाशास्त्रविभागेन **शिक्षारश्मिः** इति विदुषां शोधलेखैः सुभूषिता शोधपत्रिका प्रकाश्यते इति विज्ञाय परमसन्तोषमनुभवामि।

एतस्मिन् कर्मणि संलग्नाः तत्रत्याः प्राचार्याः, प्राध्यापकाः अन्ये कर्मचारिणश्च सर्वमङ्गलमवाप्नुयुः, विभागोऽयं दिने दिने समेधतां, शोधपत्रिका च लोके ज्ञानरश्मीन् विकिरतु इति मङ्गलकामना: ।

रामनवमी विक्रमसंवत्२०७६
दिल्ली

प.ना.शास्त्री
प्रो. परमेश्वरनारायणशास्त्री
कुलपतिः

56-57, Institutional Area, Janakpuri, New Delhi-110058 Ph.: (O) 28523949 (Fax) 28521948
EPABX : 28524993, 28521994, 28524995 E.Mail : rskspvc@yahoo.com

Prof. Ch. L.N. Sarma
Professor & Dean
Faculty of Education
Rashtriya Sanskrit Sansthan (DU)
Accredited with 'A' grade by NAAC
Janakpuri, New Delhi - 110 058
PRINCIPAL
RSKS (DU) Guruvayur Campus
Puranattukara, Thrissur District,
Kerala - 680 551



आचार्यः चल्ला लक्ष्मीनारायणशर्मा
आचार्यः सङ्कायप्रमुखश्च
शिक्षासङ्कायः
राष्ट्रियसंस्कृतसंस्थानम् (मा.वि.वि)
राष्ट्रियमूल्याङ्कनप्रत्यायनपरिषदा 'ए' श्रेण्यां प्रत्यायितम्
जनकपुरी, नवदेहली- 110 058
प्राचार्यः, रा.सं.सं.(मा.वि.वि.) गुरुवायूर् परिसरः
पुरनाट्टुकरा, त्रिशूर,केरला - 680551

दिनाङ्कः / Date: 12.04.2019

**शुभं भूयात्**

राष्ट्रियसंस्कृतसंस्थानस्य, क. जे. सोमैयासंस्कृतविद्यापीठस्य मुम्बईपरिसरस्य शिक्षाशास्त्र - विभागीया वार्षिकी पत्रिका शिक्षारश्मिरिति प्रतिवर्षमिव ऐषमोऽपि प्रकाश्यत इति विदित्वा मोमुदीति चेत:। अद्यत्वे उत्तमानां लेखानां सम्पादनं प्रकाशनञ्च नातिसुकरं कर्मेति लोकविदितमेव। तथापि कर्मठा: पत्रिकाया अस्या: संयोजकास्सम्पादकाश्च डा. देवदत्त सरोदे महाशया: श्रद्धया कार्यमिदं निर्वहन्तीति प्रशंसनीयमेव।

महतोऽस्य कृत्यस्य कारणभूता: प्राचार्या:, निमित्तभूता: शिक्षाशास्त्रिणश्छात्रा:, सहकारका: अध्यापकाश्च हृदयेन अभिनन्द्यन्ते। शिक्षारश्मिरियम् आचन्द्रतारार्कं प्रसरतादिति कामयमान: ........

भावत्क:

आचार्या: चल्ला. लक्ष्मीनारायणशर्मा

शिक्षासङ्कायप्रमुख:, राष्ट्रियसंस्कृतसंस्थानम्

Ph : 0487 - 2307 608, 94460 37208; e-mail: chlnsarma@gmail.com; rss.guruvayoor@gmail.com

आचार्यः ए. पि. सच्चिदानन्दः
प्राचार्यः (प्र)
राष्ट्रियसंस्कृतसंस्थानम्,
(भारतशासनमानवसंसाधनविकासमन्त्रालयाधीनः मानितविश्वविद्यालयः)
राजीवगान्धीपरिसरः, शृङ्गेरी - 577 139



Prof. A. P. Sachidananda
Principal (I/C)
RASHTRIYA SANSKRIT SANSTHAN
(Deemed University under MHRD Govt. of India)
Rajiv Gandhi Campus, Sringeri - 577 139

# शुभाशंसनम्

## जनयतु हर्षं शिक्षारश्मिः

राष्ट्रियसंस्कृतसंस्थानस्य **"योऽनूचानः स नो महान्"** इति ध्येयवाक्यम् । तदनुसृत्य राष्ट्रियसंस्कृतसंस्थानेन प्राचीनशिक्षातत्त्वानां पुनरध्ययनाय प्रचाराय च शिक्षाशास्त्रस्य पाठ्यक्रमः समारब्धः । **"फलानुमेयाः प्रारम्भाः"** इति न्यायानुसारं राष्ट्रियसंस्कृतसंस्थानं समस्तविश्वे संस्कृतशिक्षां विस्तारयामास । तथैव साम्प्रतमपि राष्ट्रियसंस्कृतसंस्थानस्य विविधेषु परिसरेषु शिक्षाशास्त्रपाठ्यक्रमः सञ्चाल्यते । तेषु क.जे.सोमय्यासंस्कृतविद्यापीठम् अपि अन्यतमम् । अत्र महत्या श्रद्धया शिक्षाशास्त्रविषयपाठनेन सह पाठ्येतरकार्याण्यपि प्रवर्तन्ते । तत्र शिक्षाविभागीयैः प्राध्यापकैः छात्रैश्च मिलित्वा बहुभाषाभूयिष्ठेयं **शिक्षारश्मि**नाम्नी शिक्षाशास्त्रविभागीया वार्षिकी पत्रिका मनोज्ञया शैल्या सम्पादिता अस्तीति विज्ञाय मोमुदीति नश्चेतः ।

एतस्मिन् पत्रिकासम्पादनकर्मणि सततं परिश्रमं कृतवद्भ्यः डा. देवदत्त सरोडे प्रभृतिभ्यः विभागीयप्राध्यापकेभ्यः, मार्गदर्शनं दत्तवद्भ्यः प्राचार्येभ्यः, सहकृतवद्भ्यो, छात्रेभ्यश्च मङ्गलं कामये ।

सर्वान्ते सन्दर्भेऽस्मिन् शरदिन्दुसन्निभायाः शारदाम्बायाः, सुधांशुकलितोत्तमाङ्गस्य चन्द्रमौलीश्वरस्य, श्रीमज्जगद्गुरूणां श्रीश्रीभारतीतीर्थमहास्वामिनां तत्करकमलसञ्जातानां श्रीश्रीविधुशेखरभारतीमहास्वामिनाञ्च चरणकमलेषु प्रणतिततीः समर्पयामि ।

विलम्बफाल्गुणतृतीयाशनिवासरः

२३-०३-२०१९

विद्वज्जनविधेयः

ए.पी.सच्चिदानन्दः

प्रो. ए.पि.सच्चिदानन्दः

प्राचार्यः (प्र)

**प्रो. एस. के. शर्मा**
**प्राचार्य**
**राष्ट्रिय संस्कृत संस्थान**
(मानित विश्वविद्यालय)
(मानव संसाधन विकास मन्त्रालय, भारत सरकार के अधीन)
**क. जे. सोमैया संस्कृत विद्यापीठ,**
विद्याविहार ( पू. ) मुम्बई




**Prof. S. K. Sharma**
**Principal**
**RASHTRIYA SANSKRIT SANSTHAN**
(Deemed University)
Under Ministry of H. R. D. Govt. of India
**K. J. Somaiya Sanskrit Vidyapeetha,**
**Vidyavihar (E), Mumbai**

दिनाङ्कः १५/०४/२०१९

# स्वस्तिवचनम्

**एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।**
**स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥** - मनुः

भारतवर्षेऽस्मिन् पुण्यभूमौ विद्याविद्योतितानां प्रज्ञापुरुषाणां सविधे निखिलेऽस्मिन् जगति विद्यमानान् मानवान् सद्वर्त्मनि वर्तितुं सद्वृत्तं समधिगन्तुम् निर्दिशति महर्षिमनुः । तदेतच्चरित्रं ज्ञानं विना व्रतमन्तरेण च सर्वथा दुःशकम्, अतो ज्ञानं समासाद्य तपसा सदाचारे वर्तनमपेक्षितम् । अनेन सुतरामेतत्स्पष्टं भवति पुरा भारते ज्ञानं शीलं च कियन्महनीयं स्थानं भजतः इति । साम्प्रतमपि नैतदसाम्प्रतमिति प्रत्येमि । भारते ज्ञानविज्ञानपरम्परा वेदेषु विद्याऽविद्या इति, उपनिषत्सु पराऽपरा चेति प्रथिता । तां परम्परामजस्रं निर्वहद् **योऽनूचानः स नो महान्** इति वचनं सार्थकीकुर्वद् राजते लोके राष्ट्रियसंस्कृतसंस्थानम् । अस्यैवान्यतमपरिसरः मुम्बई इत्याख्यायां महानगर्यां विलसति । अत्र विद्यमानेन शिक्षाशास्त्रविभागेन प्रतिवर्षमिवाऽस्मिन् वर्षेऽपि **शिक्षारश्मिः** इति विभागीया शोधपत्त्रिका प्रकाश्यते इति महतः प्रमोदस्य विषयः । ज्ञानस्य ज्योतिः सदा दीप्येत तदर्थं शिक्षणानुसन्धानप्रकाशनादिकर्म अनिशं प्रवर्ततामिति कामये । एतस्मिन् श्रमसाध्ये कर्मणि आत्मनः व्यापारितवतां सुधियां प्राध्यापकानां शिवः शिवमातनोतु इति मङ्गलकामनाः ।

रामनवमी, विक्रमसंवत् २०७६ — प्रो. सुदेशकुमारशर्मा
मुम्बई — प्राचार्यः

Suruchi Kala Bhavan, 1st Floor, Somaiya Vidyavihar, Vidyavihar (E), Mumbai – 400077
Ph.: 022-21025482, Mob. : +919549160005, Email- rsksmumbai@yahoo.com, skjpr15@yahoo.com



# सम्पादकीयम्

**अच्छिन्नस्य ते देव सोम सुवीर्यस्य रायस्पोषस्य ददितारः स्याम।**
**सा प्रथमा संस्कृतिर्विश्ववारा स प्रथमो वरुणो मित्रो अग्निः॥** यजुर्वेद 7.14

**'सा प्रथमा संस्कृतिर्विश्ववारा'** इति अध्वर्युवेदस्य आर्षोक्तरीत्या भारतीया संस्कृतिः विश्वजनैः वरणीया सेवनीया च विद्यते। सेयं भारतीया संस्कृतिः विश्वजनीना परममहनीया पुराकालात् परमश्रद्धास्थानं बिभ्राणा विलसति। एतस्याः संस्कृतेः आधारभूता संस्कृतभाषा विद्यते। सैषा संस्कृतभाषा भारतस्य प्रतिष्ठाऽपि अस्ति। तथा चोक्तम् -**'भारतस्य प्रतिष्ठे द्वे संस्कृतं संस्कृतिस्तथा '।**

विश्वस्मिन् विश्वेऽनिशं संस्कृतस्य संस्कृतशास्त्राणाञ्च ज्ञानं विज्ञानञ्च विकचीकर्तुं **राष्ट्रियसंस्कृतसंस्थानं** संस्कृतजगति उदयाचलारूढो भानुरिव भृशं भ्राजते । अस्यैव द्वादशसु परिसरेष्वन्यतमः परिसरः मुम्बानगर्यां **राष्ट्रियसंस्कृतसंस्थानम्, क.जे. सोमैया संस्कृतविद्यापीठमि**त्याख्यया प्रथितयशस्कोऽयं वेविद्यते । अत्र साहित्यम्, व्याकरणम्, ज्योतिषम्, शिक्षाशास्त्रम्, मुक्तस्वाध्यायकेन्द्रमिति विभागपञ्चकं विलसति । इह शिक्षाशास्त्रविभागे वर्षद्वयस्य शिक्षाशास्त्रिपाठ्यक्रमे ९७ छात्राः अधीयानाः सन्ति । संस्कृतशिक्षणं शास्त्रशिक्षणं कथं विधेयम्? एतदर्थं शिक्षाशास्त्रविभागः प्राचीनाधुनिकरीतिं समासाद्य शिक्षणम्, अनुसन्धानं , प्रकाशनम् इत्येतत् कार्यत्रयम् अनुतिष्ठति। तत्र प्रकाशनकार्ये **शिक्षारश्मिः** इति वार्षिकी शोधपत्रिका आङ्ग्लहिन्दीसंस्कृतमिति तिसृभिः भाषाभिः भूषिता शिक्षाशास्त्रज्ञानसुषमामाविष्कुर्वती विलसति इति विदितचरमेव प्रेक्षावतां शेमुषीजुषाम् ।

शिक्षाशास्त्रमित्युच्यमाने तत्र का नु खलु शिक्षेति स्वाभाविकी जिज्ञासा जागर्त्येव। प्रकृतप्रसङ्गे शिक्षा नाम मानवस्य सर्वाङ्गीणविकासः इति आमनन्ति शिक्षाविपश्चिद्वराः । शीलनिर्माणमेव शिक्षा इति अपरे शिक्षाविदः, उत्तमव्यक्तित्वनिर्माणमेव शिक्षा इति केचित्। उत्तमव्यक्तित्वस्य मूलं कारणं भवति तदीयजनस्य शीलम्। अत एव ***सर्वेषामपि सर्वकारणमिदं शीलं परं भूषणम्'*** *इति* शीलं परमभूषणत्वेन परिकीर्तितं भर्तृहरिणा नीतिशतके । शिक्षामुखेन शीलं, व्यक्तित्वञ्च संवर्धयितुं शिक्षणकर्मणि मनोवैज्ञानिकप्राविधिकतत्त्वानाम् आलम्बनं नितान्तमपेक्षितम्, अतः सर्वमेतत् मनसि निधाय अमुमेव विषयं केन्द्रीकृत्य देशस्य दिग्दिगन्तरालेषु निवसतां शिक्षाशास्त्रनदीष्णानां संस्कृतशास्त्रसारस्वतसमाराधनतत्पराणां विदुषां नैके शोधलेखाः समधिगताःसन्ति। एतान् सर्वान् महता प्रयत्नेन सुचारुतया सम्पाद्य प्रज्ञाप्रसूतैर्लेखनैर्गुणवतीयं **शिक्षारश्मि**रित्याख्या शोधपत्रिका प्रतिवत्सरमिव अस्मिन् हायनेऽपि प्राकाश्यन्नीयते इति अमन्दमानन्दमनुभवामो वयम् । अत्र विद्यमानं शिक्षाशास्त्रविषयवैविध्यं, भाषावैविध्यं च नूनम् अभिज्ञशास्त्राधिजिगासूनां मनांसि प्रसह्य आवर्जयति इत्यत्र नास्त्यल्पीयान् अपि आरेकः । पत्रिकायामस्यां नैकशास्त्रकोविदैः आचार्यैः, शिक्षाशास्त्रिभिः, शोधच्छात्रैः, छात्राध्यापकैः प्रयत्नेन लिखिताः शिक्षासम्बद्धाः लेखाः प्रकाश्यमानाः सन्ति । प्रयत्नोऽयं कियत्साफ़ल्यमञ्चतीति अधरोत्तरं व्यक्तीकर्तुं विद्वद्धौरेया एव प्रमाणम् ।

राष्ट्रियसंस्कृतसंस्थानम् इति मानितविश्वविद्यालयस्य वदान्यैः कुलपतिवर्यैः मान्यैः **परमेश्वरनारायणशास्त्रि**भिः प्रदत्ताशीर्वचनैः, अन्यैः आचार्यैः रातैः शुभाशंसवचोभिः अभिप्रेरणाभिः प्रचोदिताः वयं हर्षातिरेकमनुभवामः ।

परिसरस्य प्राचार्याः **सुदेशकुमारशर्ममहोदयाः**, काले काले समुपदिशन्तः, सहायं कुर्वाणाः जटिलमेतत्कार्यं सरलमकार्षुः। विभागीयाध्यापकाः, छात्राः, कर्मचारिणश्च महता प्रयत्नेन पत्रिकासम्पादनप्रकाशननियोगमिमं द्राक् पूर्णतामनैषुः , अतः समेभ्यः कार्तज्ञ्यवचांसि वितीर्य विरम्यते विस्तरात् ।

**डा.देवदत्तसरोदे**

## शिक्षाशास्त्रविभागीयगतिविधयः 2018-19

भारतसर्वकारस्य मानवसंसाधनविकासमन्त्रालयः 1970 तमे वर्षे अक्टोबरमासस्य 15 दिनाङ्के राष्ट्रियसंस्कृतसंस्थानं संस्कृतभाषाया: प्रचारप्रसाराय प्राचीनशास्त्राणां संरक्षणाय च समुदघाटयत् । क्रमशः विकसदिदं संस्थानं २००२ तमे वर्षे मानितविश्वविद्यालयत्वेन पुरोगतिं प्राप्नोत् । लोके संस्कृतस्य बोधनस्यावश्यकतां जानन्निदं संस्थानं संस्कृतभाषाशिक्षकाणां निर्माणार्थं शिक्षकप्रशिक्षणाय शिक्षाशास्त्रविभागं १९८३ तमे वर्षे समुपास्थापयत् । अधुना विभिन्नराज्येषु स्वकीयपरिसराः संस्थानस्यास्य समुल्लसिता वर्तन्ते । विद्यमानेषु तेषु द्वादशपरिसरेषु क. जे. सोमैयासंस्कृतविद्यापीठमिदं मुम्बईनगरे राराष्टि । परिसरेऽस्मिन् व्याकरण-साहित्य-ज्योतिषविभागै: साकं शिक्षाशास्त्रविभागोऽपि राराज्यते । २००६ तमे वर्षे महाराष्ट्रराज्ये संस्कृतशिक्षकप्रशिक्षणार्थं शिक्षाशास्त्रविभागोऽयं समारभ्यत । परिसरस्यास्य प्रथमप्राचार्या: भवन्ति प्रो. प्रकाशचन्द्रमहोदया: । प्रथमशिक्षाशास्त्रविभागाध्यक्षा: भवन्ति प्रो. लोकमान्य मिश्र महोदया: । अधुना विभागोऽयं प्राचार्याणाम् आचार्याणाम् सुदेशकुमारशर्म-महोदयानां मार्ग-दर्शने, डॉ. देवदत्तसरोदेमहोदयानाम् आध्यक्ष्ये भारते एव सर्वोत्कृष्टशिक्षा-विभागेषु अन्य-तमत्वेन विराजते । परिसरममुं विभिन्नेभ्य: प्रान्तेभ्य: आभारतात् शिक्षाशास्त्रम् अध्येतुं छात्रा: समायान्ति ।

विभागस्य मुख्यभूमिका तावती उत्तमोत्तमाध्यापकानां निर्मिति: । एवञ्च छात्राध्यापकेषु शिक्षणकौशलानि प्राशासनिकक्षमता, संस्कृतसम्भाषणदक्षता, प्रायोगिक – व्यावहारिक – प्राविधिक – मनोवैज्ञानिक - विज्ञानज्ञानानुप्रयोगक्षमता इत्यादीनां सम्पादनं विभागस्य प्रमुखं लक्ष्यं विद्यते । तल्लक्ष्यप्राप्त्यर्थं श्रेष्ठाध्यापकानां समवायोऽत्र सदा प्रयतते ।

**वर्तमानशिक्षाशास्त्रविभागीयाध्यापका: -**

**गतषड्वर्षेषु छात्राणां परिणामादिविवरणम् -**

| क्र. सं | अध्यापकस्य नाम | पदम् | सेवायाः कालावधिः |
|---|---|---|---|
| 01 | डॉ. देवदत्तसरोदे | विभागाध्यक्षः, वरिष्ठसहायकाचार्यश्च | 2006 तः अद्यावधि |
| 02 | डॉ.वि.एस्.वि. भास्कररेड्डि | वरिष्ठसहायकाचार्य: | 2006 तः अद्यावधि |
| 03 | डॉ. कुमारः | संविदाध्यापकः | 2015 तः अद्यावधि |
| 04 | डॉ. विनोदकुमारशर्मा | संविदाध्यापकः | 2016 तः अद्यावधि |
| 05 | डॉ. सचिनकुमारः | अतिथ्यध्यापकः | 2018 तः अद्यावधि |
| 06 | डॉ. मनिषकुमारचाण्डकः | संविदाध्यापकः | 2018 तः अद्यावधि |
| 07 | डॉ. जितेन्द्रकुमाररायगुरुः | संविदाध्यापकः | 2018 तः अद्यावधि |

**छात्रोपलब्धय: -**

| क्रम.सं. | शैक्षिकसत्रम् | नामाङ्कित-छात्रा: | उत्तीर्णछात्रप्रातिशत्यम् | प्रथमश्रेण्योत्तीर्णच्छात्राः |
|---|---|---|---|---|
| 01 | 2011-12 | 49 | 100 | 49 |
| 02 | 2012-13 | 57 | 100 | 57 |
| 03 | 2013-14 | 63 | 100 | 62 |
| 04 | 2014-15 | 93 | 97 | 67 |
| 05 | 2015-17 | 48 | 100 | 48 |
| 06 | 2016-18 | 45 | 100 | 45 |
| 07 | 2017-19 | 48 | द्वितीयवर्षे अधीयानाः वर्तन्ते। | |
| 08 | 2018-19 | 49 | प्रथमवर्षे अधीयानाः वर्तन्ते। | |

महत: प्रमोदस्य विषयोऽयं यत् परिसरे ये छात्रा: शिक्षाशास्त्रिकक्ष्यामुत्तीर्य गतास्ते सर्वेऽपि प्राय: उत्तमक्षेत्रेषु उत्तमोद्योगं प्राप्तवन्त इति। तत्र केचन केन्द्रसर्वकारीयाभिकरणेषु, केचन केन्द्रीयविद्यालयेषु, डी. ए. वी. संस्थासु, विभिन्नराज्यस्तरीयविद्यालयेषु, दिल्ली-स्वायत्त-विद्यालयेषु, सामान्यविद्यालयेषु च कार्यं कुर्वन्तो वर्तन्ते। तथैव केचन छात्रा: विश्वविद्यालयस्तरेऽपि उपाधिधारिण: वर्तन्ते इति कथने मोमुद्यामहे वयम्।

**2018-19 शिक्षाशास्त्रविभागीयगतिविधय: -**

शैक्षिकसत्रेऽस्मिन् द्वितियवर्षेऽधीयानाः 48, प्रथमवर्षे प्रविष्टाः 49 छात्राध्यापका: वर्तन्ते। ते च महाराष्ट्र - राजस्थान – गुजरात – मध्यप्रदेश – उत्तरप्रदेश – उत्तराखण्ड – पश्चिमबङ्गाल – ओडिशा - बिहारप्रान्तेभ्य: समागता:। एतेषां सत्रारम्भ: 19-06-2018 दिनाङ्कत: समभूत्। विभागेऽस्मिन् छात्राणां बौद्धिक – मानसिक – सांस्कृतिक – मनोवैज्ञानिकविकासाय बहव: कार्यक्रमा: शैक्षिकगतिविधयश्च समायोजिताः। ते यथा -

| | | |
|---|---|---|
| 1. | अन्ताराष्ट्रिययोगदिवसः | 21-06-2018 |
| 2. | गुरुपूर्णिमाकार्यक्रमः सत्रारम्भश्च | 10-07-2018 |
| 3. | द्वितीयवर्षस्य कक्ष्यारम्भः | 27-06-2018 |
| 4. | प्रथमवर्षस्य कक्ष्यारम्भः | 11-07-2018 |
| 5. | सम्भाषणशिबिरम् | 01-08-2018 त: 14-08-2018 पर्यन्तम् |
| 6. | २१ दिनात्मकभाषाबोधनवर्गः | 01-08-2018 त: 24-08-2018 पर्यन्तम् |

| | | |
|---|---|---|
| 7. | वाग्वर्धिनीसभायाः उद्घाटनम् | 24-08-2018 (प्रतिशुक्रवासरं मध्याह्ने सभा) |
| 8. | संस्कृतसप्ताह: | 27-08-2018 त: 29-08-2018 पर्यन्तम् |
| 9. | शिक्षकदिवस: | 05-09-2018 |
| 10. | हिन्दी पखवाडा | 14-09-2018 त: 25-09-2018 पर्यन्तम् |
| 11. | शिक्षणाभ्यासः | 21-09-2018 त: 11-12-2018 पर्यन्तम् |
| 12. | विद्यालयावबोधः | 05-11-2018 त: 11-12-2018 पर्यन्तम् |
| 13. | राष्ट्रियसङ्गोष्ठीविशिष्टव्याख्यानञ्च | 10-01-2019 तः 11-01-2019 |
| 14. | प्रायोगिकशिक्षणपरीक्षा | 28 जनवरी 2019 त: 30 जनवरी 2019 पर्यन्तम् |
| 15. | मनोविज्ञानपरीक्षा | 31 जनवरी 2019 त: 01 फरवरी 2019 पर्यन्तम् |
| 16. | सूक्ष्मशिक्षणप्रशिक्षणम् | 11-02-2019 त: 18-02-2019 पर्यन्तम् |
| 17. | क्रीडोत्सव: क्रीडास्पर्धाश्च | 13-02-2019 त: 14-02-2019 पर्यन्तम् |
| 18. | योगाभ्यासकक्ष्या | 15-02-2019 |
| 19. | आदर्शसाक्षात्कारः | 25-02-2019 |
| 20. | शोभायात्रा | 15-03-2019 |
| 21. | वीथीनाटकम् | 15-03-2019 |
| 22. | पूर्ववार्षिकपरीक्षाः | 18-03-2019 तः 22-03-2019 |
| 23. | वार्षिकपरीक्षाः | 04-04-2019 तः 22-04-2019 |

**अध्ययनार्थं सौविध्यानि —**

परिसरेऽस्मिन् छात्राणाम् अध्ययनार्थं प्राविधिकयन्त्रसहितकक्षाप्रकोष्ठ: विद्यते । प्रकोष्ठेऽस्मिन् सङ्गणकध्वनिमुद्रिकाप्रक्षेपकयन्त्रै: दैनन्दिनपाठनं भवति । प्राध्यापकाः सङ्गणकयन्त्रस्य सहायेन बोधनं कथं करणीयमिति सप्रयोगं कक्ष्यायां प्रदर्शयन्ति । छात्राध्यापका अपि सङ्गणकस्य सदुपयोगं कुर्वन्तः प्राविधिकशिक्षणं प्राप्नुवन्ति ।

१. छात्रवृत्तिः- शिक्षाशास्त्रिकक्षायां ३० छात्रा: स्वशैक्षिकयोग्यतानुगुणं प्रतिमासं अष्टशतं (८००/-) रुप्यकाणां छात्रवृत्तिं प्राप्नुवन्ति ।

२. सङ्गणकप्रयोगशाला - छात्राणां प्राविधिकसङ्गणकीयकौशलान्यभिवर्धयितुं सङ्गणकप्रयोगशाला स्थापिता । यत्र विंशत्यधिकसङ्गणकानि उपलब्धानि ।

३. मनोविज्ञानप्रयोगशाला - पाठ्यक्रमानुगुणं मनोविज्ञानप्रयोगान् कर्तुं यथासंख्यं पर्याप्तोपकरणानि विद्यन्ते ।

तथा पाठ्यक्रमेतरोपकरणान्यपि उपलब्धानि वर्तन्ते । तेषु अवधान – व्यक्तित्व – बुद्धि – अभिरुचि – अभिवृत्ति - चिन्तनविषयकाध्ययनार्थं मनोवैज्ञानिकोपकरणानि सन्ति ।

४. विभागीयग्रन्थालयः - परिसरीयबृहत्केन्द्रग्रन्थालयमतिरिच्य विभागीयग्रन्थालये पाठ्यक्रमविषयान् अध्येतुं पुस्तकानि यथेष्टं स्वीकर्तुम् अवसरः छात्रेभ्यः प्रदीयते । तथैव ग्रन्थालयेऽस्मिन् १५०० पुस्तकानि पाठ्यक्रमसम्बद्धानि पाठ्यक्रमेतराणि अनुसन्धानविषयनिष्ठानि संस्कृतभाषादक्षतोत्पादकानि उच्चतरशिक्षां प्राप्तुमिच्छुकानां कृतेऽपि पुस्तकानि उपलभ्यन्ते ।

५. प्रविधिप्रयोगशाला - छात्राणां प्राविधिकज्ञानार्थम्, उपकरणनिर्माणार्थम्, सङ्गणकमाध्यमेन पाठनाभ्यासं कर्तुं पर्याप्तोपकरणानि प्रविधिप्रयोगशालायां विद्यन्ते ।

६. क्रीडाविभागः - छात्राणां सर्वाङ्गीणविकासार्थं क्रीडयितुं च डॉ. शङ्कर बाबुराव आन्धले इति क्रीडाप्रशिक्षकः वर्तते । यस्य मार्गदर्शने सोमैयापरिसरीयप्राङ्गणेषु शारीरिक - बौद्धिकक्रीडाः क्रीडितुम् अवसराः कल्प्यन्ते ।

**विभागे शोधावसराः —**

विद्यावारिधिः (Ph.D.) इत्युपाधिं प्राप्तुं सुयोग्याः मार्गदर्शकाः विभागे विद्यन्ते । शोधविभागेऽस्मिन् शिक्षाशास्त्रसम्बद्धाः छात्राः, आधुनिकसंस्कृतविज्ञानशोधचिकीर्षवश्च विभिन्नक्षेत्रेषु शोधं विधातुं प्राप्तावसराः दृश्यन्ते । अधुना विभागस्यास्य वरिष्ठप्राध्यापकस्य डॉ. देवदत्तसरोदेवर्यस्य मार्गदर्शने श्रीमती मैत्रेयी मणेर इति शोधच्छात्रा व्याकरणविषये, डॉ. वि. एस्. वि. भास्कररेड्डिवर्यस्य मार्गदर्शने श्री योगेन्द्रकुमारः, श्रीमती नम्रता पटेल इति द्वौ शोधच्छात्रौ साहित्यविषये च शोधकार्यं कुर्वन्तः सन्ति ।

इत्थं सर्वविधैः साधनैः नदीष्णप्राध्यापकैश्च साकं परिसरीयशिक्षाशास्त्रविभागोऽयं सर्वेषां छात्राध्यापकानां शोधोत्सुकानां प्रोत्साहनं वितन्वन्, छात्राणाञ्च शिक्षणकौशलानि अभिवर्धयन् वरीवर्ति ।

**********

# विषयानुक्रमणिका

## प्रज्ञानखण्डः



**********

# शिक्षणाधिगमयोः मनोवैज्ञानिकप्राविधिकतत्त्वानामनुप्रयोगः

✍श्री. पी. नागमुनिरेड्डी *

**द्वे विद्ये वेदितव्ये परा चापरा च ।**
**मोक्षे धीर्ज्ञानं अन्यत्र विज्ञानं शिल्पशास्त्रयोः ।**
**तत्कर्म यन्न बन्धाय सा विद्या या विमुक्तये ।**
**आयासायापरं कर्म विद्यान्या शिल्पनैपुणम्।।**

इत्यत्र शिल्पनैपुण्यादि व्यावहारिकविद्या, वर्तमानकाले या Science Education , Technical Education, Vocational Education, Professional Education इत्यादि नाम्ना प्रसिद्धा सा प्राचीनभारते **"अपरा विद्या"** इति नाम्ना व्यवहृता आसीत् ।

**अथ परा यया तदक्षरमधिगम्यते ।**
**अविद्यया मृत्युं तीर्त्वा विद्ययामृतमऽश्नुते ।**
**अध्यात्मविद्या विद्यानां......।**

इत्यत्र मोक्षदायिनी संसारनिवर्त्तनी, निवृत्तिपरा विद्या **"पराविद्या"** इति नाम्ना पूर्वं प्रथिता आसीत् । पराविद्या इत्युक्ते श्रेष्ठविद्येति, अपरा विद्या इत्युक्ते निकृष्टेति नार्थः । परेतरविद्या अपरा विद्या इत्यर्थः । पराविद्यायाः लक्ष्यमन्यत् । अपरा विद्यायाः लक्ष्यमन्यत् ।

**अपरा विद्या संसारे प्रवर्तयति ।**
**परा विद्या संसारात् निवर्तयति ।**

यो यदिच्छति तस्य तदितिवत्" यस्य यत्र मतिर्भवति अधिकारः भवति तेन तादृशी विद्या अर्जनीया इत्यर्थः । पुरुषार्थाः चत्वारः । धर्मार्थकाममोक्षाः इति । धर्मार्थकामपर्यन्तं अपरा विद्या आश्रीयते । मोक्षार्थं तु परा विद्यैवाश्रयणीया भवति । आत्मशान्त्यर्थं जन्मराहित्यार्थं तु परा विद्यैव शरण्या भवति । अत एवोक्तम् - धर्मार्थकाममोक्षाख्येषु चतुर्विधपुरुषार्थेषु मोक्ष एव परमपुरुषार्थः इति । यतोऽभ्युदयनिश्श्रेयससिद्धिस्स धर्म इति जीवनविधानत्वेन भारते घोषितमस्ति । अतः उभयोरपि **पराविद्यायाः अपराविद्यायाश्च** सङ्गतिः वरीवर्ति एव । प्रस्तुतशीर्षकं "शिक्षणाधिगमयोः मनोवैज्ञानिकप्राविधिकतत्त्वानामनुप्रयोगः" इत्येतदपराविद्यायामन्तर्भवति । शिक्षणस्योपरि अधिगमस्योपरि च मनौवैज्ञानिकतत्त्वानां प्राविधिकतत्त्वानां चानुप्रयोगः कथं भवतीति कतिपयैः अनुसंधानात्मकैरंशैः सूच्यते।

- **Heuristic Method : – स्वयमन्वेषणविधिः** –

आधुनिकवैज्ञानिकपद्धतित्वेन इयं पद्धतिः कीर्त्यमाना वर्त्तते । परमस्याः मूलं **वारुणीविद्यायां** द्रष्टुं शक्यते । तैत्तिरीयोपनिषदि शिक्षावल्याम् अन्न – प्राण – मनो – विज्ञान – आनन्दमय ब्रह्मान्वेषणे लभ्यते । भृगुर्वै वारुणिः वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तस्मै एतत्प्रोवाच –

** वरिष्ठाध्यापकः , शिक्षाशास्त्रविभागः, राष्ट्रियसंस्कृतविद्यापीठम्, तिरुपतिः*

**यतो वा इमानि भूतानि जायन्ते**
**येन जातानि जीवन्ति ।**
**यत्प्रयन्त्यभिसंविशन्ति**
**तद्विजिज्ञासस्व तद्ब्रह्मेति । तपसा ब्रह्म विजिज्ञासस्व तपो ब्रह्मेति ।**

स तपो अतप्यत । तपस्तप्त्वा अन्नं ब्रह्मेति व्यजनात् । पिता वरुणः तपसा ब्रह्म विजिज्ञासस्व तपो ब्रह्मेति अवोचत् । ततः तपसा प्राणं ब्रह्मेति, अनन्तरं मनो ब्रह्मेति, ततः विज्ञानं ब्रह्मेति, ततः आनन्दं ब्रह्मेति व्यजानात् । एवं **स्वयमन्वेषणविधिद्वारा** ब्रह्मज्ञातुं पिता प्रेरितवान् ।

- **Experimental Method: – प्रयोगविधिः -**

इयमप्यत्यन्ताधुनिकपद्धतित्वेन वैज्ञानिकपद्धतित्वेन वा कीर्त्यमाना विद्यते । अस्याः अपि मूलं छान्दोग्योपनिषदि गुरुशिष्यसंवादे द्रष्टुं शक्यते । आचार्यशिष्यसंवादे आचार्यः शिष्यमादिशति - न्यग्रोधफलमाहरेति । इदं भगव इति । भिन्धीति । भिन्नं भगव इति । आसामङ्गैकां भिन्धीति । भिन्ना भगव इति । किं पश्यसीति । न किञ्चन भगव इति । यं वै सौम्य ! एतमणिमानं न विभावयसि । एतस्य वै सौम्य ! एष अणिम्नः एष महान्यग्रोधस्तिष्ठति । श्रद्धस्व सौम्येति" । अनेन ज्ञायते यत् अतिगहनः सुसूक्ष्मः विषयोऽपि प्रयोगपुरस्सरं आचार्यैः बोध्यते स्म इति ।

- **मनोविश्लेषणवादे Id, Super Ego : –**

फ्रायड् महाशयस्य मनोविश्लेषणवादः अत्यन्तं सुप्रसिद्धः अपूर्वश्चेति परिगण्यमानो वर्तते । परं श्रीमद्भगवद्गीतायां Id स्वरूपस्य, Super Ego स्वरूपस्य मूलं द्रष्टुं शक्नुमः । **Id मतेः** स्वरूपं फ्रायड् महोदयानुसारं एवमस्ति - इयं सहजाता (It is an instinct) । सुखमात्रपरा च । सर्वदा सुखमेव केवलमनुभवितुं बलादपि प्रेरयति । सुखानुभवविषये सामाजिकसांस्कृतिकनैतिकतादिविषये नैव श्रद्धां प्रदर्शयति । एतत्कतिपयनियमानुल्लंघ्यापि सुखं लभस्वेति प्रेरयति । सर्वदा स्वार्थमेव ईहते । **Super Ego मतेः** स्वरूपं एवमस्ति - इयं नैतिकवर्तनी । धर्माधर्मविवेकपूर्णा । असुखकरोऽपि धर्म एव सदाचरणीय इति सर्वदा प्रेरयति । श्रीमद्भगवद्गीतायां उपर्युक्तमेव तत्त्वं दैवासुरसंपद्विभागयोगे Id आसुरीसंपत्तित्वेन, Super Ego दैवीसंपत्तित्वेन च अतिविस्तरेण वर्णिते उपलभ्येते । तद्यथा-

- **दैवीसंपत्तिः(Super Ego) -**

**अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।**
**दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ।**
**अहिंसा सत्यमक्रोधस्त्यागश्शान्तिरपैशुनम् ।**
**दया भूतेष्वलोलुपत्वं मार्दवं ह्रीरचापलम् ।।**
**तेजः क्षमा धृतिश्शौचमद्रोहो नातिमानिता ।**
**भवन्ति संपदं दैवीमभिजातस्य भारत ! ।।**

- **आसुरीसंपत्तिः ( Id ) -**

दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च ।
अज्ञानं चाभिजातस्य पार्थ संपदमासुरीम् ।।
दैवीसंपद्विमोक्षाय निबन्धायासुरी मता ।
माशुचस्संपदं दैवीमभिजातोऽसि पाण्डव ।।
द्वौ भूतसर्गौ लोकेऽस्मिन्दैव आसुर एव च ।
दैवो विस्तरशः प्रोक्त आसुरं पार्थ ! मे शृणु ।।
प्रवृत्तिं च निवृत्तिञ्च जना न विदुरासुराः ।
न शौचं नापि चाचारो न सत्यं तेषु विद्यते ।।
असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसंभूतं किमन्यत्कामहैतुकम् ।।
एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ।।
काममाश्रित्यदुष्पूरं दम्भमानमदान्विताः ।
मोहाद्गृहीत्वासद्ग्राहान्प्रवर्तन्तेऽशुचिव्रताः ।।
चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः ।
कामोपभोगपरमा एतावदिति निश्चिताः ।।
आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ।
ईहन्ते कामभोगार्थमन्यायेनार्थसञ्चयान् ।।
इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम् ।
इदमस्तीदमपि मे भविष्यति पुनर्धनम् ।।
असौ मया हतश्शत्रुर्हनिष्ये चापरानपि ।
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्सुखी ।।
आढ्योऽभिजनवानस्मि कोऽन्योस्ति सदृशो मया ।
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ।।
अनेकचित्तविभ्रान्ता मोहजालसमावृताः ।
प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ।।
आत्मसंभावितास्स्तब्धा धनमानमदान्विताः ।
यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् ।।
अहङ्कारं बलं दर्पं कामं क्रोधं च संश्रिताः ।
मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ।।

**तानहं द्विषतः क्रूरान्संसारेषु नराधमान् ।**
**क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ।।**
**आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।**
**मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ।।**
**त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।**
**कामः क्रोधस्तथालोभस्तस्मादेतत्त्रयं त्यजेत् ।।**
**एतैर्वियुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः ।**
**आचरत्यात्मनश्श्रेयस्ततो याति परां गतिम् ।।**

एतेन स्पष्टं भवति यत् Id मतेः, Super Ego मतेः मूलं श्रीमद्भगवद्गीतायां अस्तीति ।

- **Einstein's definition of ENERGY**

"Energy is neither created nor can be destroyed. It is constant. It can be Transformed"

एतस्य मूलं श्रीमद्भगवद्गीतायां स्पष्टतयास्ति । तद्यथा –

**न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः ।**
**अजो नित्यश्शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ।।**
**वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि ।**
**तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ।।**

Einstein महोदयस्य Energy शक्तिर्भवति । एषा परा शक्तिरूपेण, आदिशक्तिरूपेण, मूलशक्तिरूपेण, परात्पररूपेण, परतत्त्वरूपेण, परब्रह्मरुपेण, परात्मा इति, आत्मा इत्यादि बहुविधैः शब्दैः शास्त्रेषु दर्शनेषु च सूचिता वर्तते । एतेन स्पष्टं भवति यत् अस्याः अपि मूलं भारतीयतात्त्विकालोचनायां वरीवर्तते इति ।

- **ZENE Theory**

अस्यापि आनुवंशिकसिद्धान्तस्य मूलं परमेश्वरस्य **अर्धनारीश्वरतत्त्वे** द्रष्टुं शक्यते । विज्ञानानुसारं XY chromosomes जनकद्रव्याणि पुरुषे एव भवन्ति न तु स्त्रियाम् । स्त्रियां तु XX जनकद्रव्याण्येव भवन्ति । तत्र Y जनकद्रव्यमेव पुंस्त्वसंततिसूचकं भवति । X जनकद्रव्याणि स्त्रीसंततिसूचकानि भवन्ति । पुरुषे वर्तमान XY मध्ये X जनकद्रव्याणाम् एव संयोगः योषिति वर्तमान XX जनकद्रव्यैः साकं भवति चेत् स्त्रीसंततिर्भवतीति, पुरुषे एव वर्तमान Y जनकद्रव्यैस्सह संयोगः स्त्र्यन्तर्गत XX जनकद्रव्यैस्सह भवति चेत् पुरुषसंततिर्भवतीति विज्ञानेन निरूपितमस्ति । एतदेव प्रतीकरूपेण (Symbolically) **अर्धनारीश्वरतत्त्वे** सूचितमस्ति । अर्धनारीश्वरत्वे पुरुषत्वमप्यस्ति स्त्रीत्वमप्यस्ति । अर्थात् X जनकद्रव्याणि पुरुषत्वसूचकानि एवं Y जनकद्रव्याणि स्त्रीत्वसूचकानि सन्तीत्यर्थः । एतत् अर्धनारीश्वरत्वं परमशिवे (पुरुषे एव) एव अस्ति न

तु पार्वत्याम् । पार्वत्यां तु अर्थात् (स्त्रियां) XX इति स्त्रीत्त्वप्रजननसमर्थाणि जनकद्रव्याण्येव भवन्तीत्यर्थः । अत एव पार्वतीपरमेश्वरौ "**जगत्पितरौ**" इति कीर्तितौ –

**वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये ।**
**जगतः पितरौ वंदे पार्वतीपरमेश्वरौ ।।**

इति महाकविना कालिदासेन घोषितमस्ति । परमशिवः पार्वतीं प्रति एवं कथयति । अहं शुक्रस्त्वं शोणितम् । आवयोः सङ्गमः इमाः सर्वाः प्रजाः इति । एतेन स्पष्टं भवति यत् zene Theory इत्यस्य मूलं भारतीयतंत्रग्रन्थेषु लभ्यते इति ।

- **Brain Storming – मस्तिष्कविप्लवः -**

Brain Storming इत्युक्ते चर्चायां भागग्रहीतारः सर्वेऽपि यादृशीः भावनाः अभिव्यञ्जयन्ति तासां तिरस्कारो वा विमर्शो वा प्रथमाधिवेशने न भवति । तासामुपरि चर्चा खण्डनमण्डनादिकं विमर्शनं वा सद्यः न भवति । कालान्तरे अन्यस्मिन् अधिवेशने पूर्वाभिव्यक्तानां आलोचनानां मूल्याङ्कनादिकं भवति । एतादृशरीत्या आविष्कृतानां भावानां महन्मूल्यमस्तीति परिशोधनैः ज्ञातं वर्तते । समुद्रमन्थनद्वारा अमृतप्राप्त्युदन्तोऽपि एतादृशीं प्रक्रियामेव सूचयति । प्रतीकरूपेण (Symbolically) मन्थनद्वारा अमृतफलप्राप्तिरूपिणी क्रियोत्पत्तिः भवतीति सूचितास्ति । लोकेऽपि तक्रस्य मन्थनेनैव नवनीतं उत्पद्यते । योगशिखोपनिषद्यपि एतदेव तत्त्वं उक्तमस्ति । तद्यथा –

**यथाग्निर्दारुमध्यस्थो नोतिष्ठेन्मन्थनं विना ।**
**विनाचाभ्यासयोगेन ज्ञानदीपस्तथा न हि ।।** Yogashikha – 6-76

- **Bloom's Taxonomy of Educational Objectives - ब्लूम महोदयस्य शिक्षाद्देश्यानां वर्गीकरणम् -**

Cognitive Domain, Affective Domain, Conative Domain रुपेण प्राधान्येन ब्लूममहोदयस्य शिक्षोद्देश्यानां वर्गीकरणं प्रसिद्धमस्ति । अस्यापि मूलं भारतीयतात्त्विकचिन्तने दर्शनधारायां ज्ञानशक्तिः Cognitive Domain (इच्छाशक्तिः), Affective Domain (क्रियाशक्तिः), Conative Domain इत्यत्र द्रष्टुं शक्यते । एतेन स्पष्टं भवति यत् शैक्षिकविधानस्य मूलं प्राचीनभारते बहुत्र द्रष्टुं शक्यते इति ।

अनुप्रयोगे सूक्ष्मेक्षिकया परिशीलनं , उभयत्र गंभीरज्ञानं, वैज्ञानिकदृष्टिः, नूतनदृष्ट्या परिशीलनं, तुलनात्मकरीत्या प्रतिपादनञ्चेत्यादिकमपेक्षते । दुर्योधनादि कौरवसंततिः Test Tube Baby प्रक्रियासूचिका वर्तते । शिखण्डी Transgender इत्यस्य प्रतीकरूपः ।

**********

# संस्कृतशास्त्रेषु विद्यमानाधिगमतत्त्वस्य तदुपकारकोपायानाञ्च विचारः

✍डॉ. देवदत्तसरोदे *

संसारेऽस्मिन् सतीन्द्रजालमपरं यद्यस्ति तेनापि किम् ! एवंजातीयके विस्मयभूते विरञ्चिविरचिते विश्वेऽस्मिन् तापत्रयविघाताय अजस्रं घटमाना: प्राणिन: अनादिकालाद् विलोक्यन्ते। एतदपि साम्रेडमुच्यते असकृत् आकर्ण्यते च यद् दु:खनिवृत्तिस्तु ज्ञानमन्तरेण सर्वथा दु:शकमिति तच्च **ऋते ज्ञानान्न मुक्तिः**[१] इति शास्त्रवचनात् प्रमाणितं भवति, एवं गते सति प्रयत्नेन ज्ञानं समुपार्जनीयम् इति फ़लितं। किञ्च प्रमाणं प्रमेयमिति तत्त्वद्वयं सम्यग्विजानीमहे तर्हि निश्चप्रचं दु:खविघातस्तु जायेत। वस्तुत: प्रमेयं ज्ञेयं तच्च प्रमाणाद्धि बोद्धुं सुकरम् , उच्यते च **"मानाधीना मेयसिद्धि" "प्रमेयसिद्धिः प्रमाणाद्धिः"**[२] इति. तत: जायमानो बोध: एव ज्ञानं , प्रमा, प्रमिति: इति नाना शब्दै: अभिधीयते। परमार्थत: प्रमाणान्येव ज्ञानागमसाधनानि।

**विद्ययाऽमृतमश्नुते**[३] इति श्रुतिवचनेन **सा विद्या या विमुक्तये**[४] इति पुराणवचनेन सार्वभौमसार्वकालिकमाहात्म्यं विद्याया: निर्विवादतथ्यमिति शेमुषीजुषां विदितचरमेव। उपनिषत्सु विद्या द्विधा प्रोक्ता **द्वे विद्ये वेदितव्ये परा चापरा चेति** [५] परा सा यया अक्षरमधिगम्यते , अपरा ऋग्वेदादि नानाशास्त्राणि । सैषा विद्या श्रद्धया तपसा सेवया प्राप्यते इति भगवता कृष्णेन गीतायां **श्रद्धावान् लभते ज्ञान**मिति, **तद्विद्धिप्रणिपातेन** [६] इति वचनाभ्यां समुपदिदेश। सार्वजनीना कल्याणीयं विद्या अनादिकालात् सर्वलोकानां मङ्गलं कुर्वती आद्रीयमाणा लोके दरीदृश्यते। सनातनवैदिकपरम्परायां सर्वा: विद्या: सर्वज्ञानं वेदादेव निष्पन्नमिति आमनन्ति विपश्चिद्वरा:, अत: मनुरप्याह **सर्वज्ञानमयो हि सः**[७], । प्राचीनभारते नानाविद्याशाखानामुत्कर्ष: शिक्षणपरम्परां विना सर्वथा दु:शकम् तदेतत् प्राचीनसंस्कृतवाङ्मयानुशीलनेन सुतरां स्पष्टं भवति यत् संस्कृतशास्त्रेषु उपनिषत्सु शिक्षणाधिगमावधिकृत्य तत्प्रभाविकर्तुम् अभिगमानाम् उपायानां, प्रभूतानि प्रमाणानि उपलभ्यन्ते , शोधपत्रेऽस्मिन् स्थालीपुलाकन्यायेन **संस्कृतशास्त्रेषु विद्यमानाधिगमतत्त्वस्य तदुपकारकोपायानां विचारः विधीयते**।

आदौ तावत् शिक्षणाधिगमावधिकृत्य उपयुज्यमाना: कतिपयपारिभाषिकपदानां विवरणमधस्तात्प्रस्तूयते । शिक्षणकर्म अध्यापकनिष्ठं भवति, अधिगम: अध्येतरि जायमानं क्रमिकपरिवर्तनम् । शिक्षणम् अध्यापकाध्येतृभ्यां फ़लितं भवति । सुष्ठु अधिगमनिमित्तं कं विधिम् अध्यापक: आश्रयेत् इत्ययं विषयस्तु अध्यापकविवेकाधीनो भवति । अत: को नु खलु विधि: ? इति जिज्ञासायाम् उच्यते ….

♦**विधिः Method** – अन्यान् बोधयितुं शिक्षयितुं व्यवस्थितक्रमबद्धतार्किकसोपानै: निबद्धा पद्धति: सरणी वा। अध्यापने एकैव पद्धति: आदित: आन्तं यावत् यथायथम् आश्रियते इति नियमो नास्ति। प्रतिशिक्षकम्

** सहायकाचार्यः, शिक्षाशास्त्रविभागः, राष्ट्रियसंस्कृतसंस्थानम्, (मा.वि) मुम्बई परिसरः*

अध्यापनशैली भिद्यते , कक्षायामपि प्रतिप्रसङ्गं , प्रतिविषयं विधिर्भिद्यते , तथा च श्रूयते चीनदेशस्य एकस्मिन् आभाणके **यावन्त: अध्यापका: तावन्त: शिक्षणविधय:** इति , संस्कृते ब्रूमश्चेद् **मुण्डे मुण्डे मतिर्भिन्ना तुण्डे तुण्डे सरस्वती** इति अत: कदापि एवं न मन्तव्यं यत् विधीनां स्वरूपं निश्चितं संख्या च परिमिता इति।

अधिगमसम्पादनाय चारुशिक्षणकर्मणे शिक्षणयुक्तय: उपकुर्वन्ति, तासां स्वरूपज्ञानं प्रयोगकौशलम् अध्यापके भवेत्, कास्ता: युक्तय: इति जिज्ञासायाम् उच्यते …..

- **युक्ति: उपाय: वा Technique** – शिक्षणकर्मणि विशिष्टकार्यसम्पादनाय प्रयुज्यमाना परिष्कृता, परिभाषिता प्रक्रिया उपायो वा ।

शिक्षणकर्मणि केन उपागमेन प्रवर्तितव्यम्, येन शिक्षणसिद्धान्तानां , विचाराणां , सम्प्रत्ययानां सम्यग् विनियोग: भवितुमर्हति, स च उपागम:, अभिगमो वा कथम्भूत: स्यात् , तदर्थमुच्यते ….

- **अभिगम: अथवा उपागम: approach** :- अधिगमस्वभावसम्बद्धा: विचारा:, सम्प्रत्यया:, सिद्धान्ता: यान् आश्रित्य कक्षायाम् इतरत्र वा शिक्षणकर्म सम्पाद्यते । कतिपया: अभिगमा: अधस्तात् प्रस्तूयन्ते …

यथा युद्धे विजयाय व्यूह: अपेक्षित: तद्वत् शिक्षणे साफ़ल्याय शिक्षणव्यूह: अपेक्षितो भवति, स च शिक्षणव्यूह: निम्नाङ्कितो भवति ।

| क्रमसङ्ख्या | अध्यापककेन्द्रिताभिगमा: | छात्रकेन्द्रिताभिगमा: |
|---|---|---|
| १ | विषयकेन्द्रित: subject centered | छात्रकेन्द्रित: learner centred |
| २ | अध्यापकप्रभुत्वम् teacher dominated | संवादात्मक:, interactive |
| ३ | निधानात्मक:, banking or pouring | संरचनात्मक: constructive |
| ४ | अनुशासनात्मक:, एकदेशी, disciplinal | समावेशात्मक:, बहुशास्त्रीयाभिगम: integrated |
| ५ | वैयक्तिक: individualistic | सहयोगात्मक: collaborative |
| ६ | अप्रत्यक्ष:,मार्गदर्शित: indirect guided | प्रत्यक्ष: direct |

- **शिक्षणव्यूह:** Teaching- Strategy – शैक्षिकलक्ष्यप्राप्त्यर्थं रचिता क्रमबद्धसुनियोजितकार्यप्रणाली ।

अध्यापकस्य प्रधानं कर्म शिक्षणं तस्य शिक्षणकर्मण: प्रधानोद्देश्यं छात्रस्याधिगम: , अधिगमो नाम

**शिक्षणेन प्रशिक्षणेन उपदेशेन, अनुभवेन, कयाचित् घटनया जीवस्य व्यवहारे जायमानं सापेक्षिकशाश्वतपरिवर्तनमेव अधिगम:।** अधिगमप्रक्रिया अधिगमफ़लम् एतद् द्वयमपि अधिगमशब्देन अभिधीयते ज्ञानस्य, कौशलानाम् अभिवृत्तीनाम्, अभिरूचीनाम्, अर्जनप्रक्रिया तत्फ़लञ्च अधिगम:।

अधिगमप्रक्रिया कथं सम्पद्यते ? एतद्विषयका: केचन सिद्धान्ता: पाश्चात्यमनोवैज्ञानिकै: प्रतिपादिता: ।इमे सिद्धान्ता: अधिगमस्य स्वरूपं , स्वभावं प्रक्रियाञ्च वर्णयन्ति । प्रत्ना: आचार्या अपि अधिगममधिकृत्य तदीयशास्त्रेषु विचारान् , सम्प्रत्ययान् प्रोचु: शास्त्रभेदेन तेषामाचार्याणामभिमतं पुरस्तात् प्रस्तूयते ....

आदौ तावत् न्यायशास्त्रे अधिगममधिकृत्य तत्साधनानाम् उपायानां विचार: प्रस्तूयते, तद्यथा -

- **न्यायशास्त्रम्- (**प्रमाणम्, प्रमेयम्, प्रमाणेन प्रमेयप्रतिपत्ति:, ज्ञानागमसाधनानि चत्वारि प्रमाणानि, पञ्चावयवा: - प्रतिज्ञा, हेतु: , उदाहरणम्, उपनय: निगमनम् इति ...इति प्रमुखबिन्दव: )

तत्र तावत् ज्ञानम् अथवा अधिगमो नाम **सर्वव्यवहारहेतुर्गुणो ज्ञानं बुद्धि: – सा द्विविधा स्मृतिरनुभवश्च**[८]

**संस्कारमात्रं जन्यं ज्ञानं स्मृति: ।** एतदेव योगभाष्यकार: एवं दृढयति **वृत्तिभि;(अनुभवै:) संस्कारा: (स्मृतय:) संस्कारैश्चवृत्तय:एवं वृत्तिसंस्कारचक्रमनिशमावर्तते**[९] इति । अधिगमो द्विधा जायते । प्रथमस्तावत् चतुर्भि**:** प्रमाणै**:** **,** द्वितीयस्तु सञ्चितसंस्कारै**:** जायते। चतुर्भि**:** प्रमाणै**:** **जायमानाधिगम:** चतुर्धा **,** तथा च

इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षम्[१०]**,**

अनुमानेन जायमानं ज्ञानम् अनुमानज्ञानम्**,**

उपमित्या जायमानं ज्ञानम् उपमानज्ञानम्**,**

शब्दात् जायमानं ज्ञानं शाब्दज्ञानम्

अयं चतुर्भि**:** प्रमाणै**:** जायमानाधिगम: स्मृतिभिन्नं ज्ञानमनुभव:। एष अनुभवात्मको बोध**:** अधिगम: द्विधा भवितुमर्हति यथार्थाधिगम: मिथ्याधिगमश्चेति तद्वति तत्प्रकारकोऽनुभवो यथार्थ:। सैव प्रमा इत्युच्यते । रजते रजतस्य बोध:, शुक्तौ शुक्ते: बोध: इति तदभाववति तत्प्रकारकोऽनुभवोऽयथार्थ:। सैवाप्रमा इत्युच्यते। यथा**-** शुक्तौ रजतस्य बोध: ,अतस्मिन् तद्बुद्धि: अयथार्थानुभव: अथवा मिथ्याज्ञानम्। योगशास्त्रे एषा अप्रमा विपर्ययवृत्ति: अथवा मिथ्याज्ञानम् भवति ।

यथार्थानुभश्चतुर्विध:प्रत्यक्षानुमित्युपमितिशाब्दभेदात् - प्रत्यक्षानुभव: (प्रत्यक्षबोध:), अनुमित्यनुभव:, उपमित्यनुभव:, शाब्दानुभवश्च । तत्करणमपि चतुर्विधं प्रत्यक्षानुमानोपमानशब्दभेदात् – पूर्वोक्तानां चतुष्प्रकारकाणाम् अनुभवानां साधनमपि चतुर्विधं तच्च प्रत्यक्षप्रमाणम्**,** अनुमानप्रमाणम्**,** उपमानप्रमाणम्**,** शब्दप्रमाणम् इति **शिक्षाशास्त्रे योऽयमधिगम: स एव न्यायशास्त्रे** ज्ञानम् अथवा अनुभवो **(**बोध**:)** भवति स च द्विधा उत्पद्यते**,** चेतसि पूर्वसञ्चितसंस्कारेण संस्कारमात्रं जन्यं ज्ञानम् अनुभवोऽधिगमो वा द्वितीयं प्रमाणचतुष्टयेन जन्यं ज्ञानम् अनुभवोऽधिगमो वा

**न्यायशास्त्रे अधिगमविचारवेलायां प्रमाता , प्रमेयम्, प्रमाणम् , प्रमा ( प्रमितिः ) इतीमानि पदानि अवश्यं ज्ञातव्यानि तानि अधस्तात् प्रस्तूयन्ते**

ज्ञाता-प्रमाता, २. ज्ञेयम्-प्रमेयम्, ३. ज्ञेयसाधनम्-प्रमाणम्, ४. ज्ञानम्- प्रमिति: एषा प्रमितिरेव अधिगम: , प्रमा (यथार्थ: अयथार्थ:) इति इमानि शिक्षणे प्रमुखानि चत्वारि तत्त्वानि सन्ति शिक्षाशास्त्रस्य न्यायशास्त्रस्य च तत्त्वानां तात्त्विकसाम्यमथवा नामान्तरमेव दृश्यते तद्यथा -

**प्रमाता**- अधिगन्ता, विद्यार्थी

**प्रमेयम्** – १. पराविद्या – २. अपराविद्या(शास्त्राणि) । विद्या नाम स्थूलादारभ्य परमतत्त्वम् यावत् बोधविषया: । पराविद्यया ब्रह्मतत्त्वाधिगम:, अपराविद्यया तदितरतत्त्वाधिगम: , अपराविद्या नाम ब्रह्मेतरमोक्षेतरनानाविद्याविषया:

**प्रमिति**:- अधिगम:, ज्ञानम् , बोध: , अनुभवो वा

**प्रमाणम्** – निरीक्षणम् , गुरूणां मौखिकोपदेश: प्रवचनम् वा , ज्ञानागमसाधनानि, लिखितशास्त्रम् ।

**प्रत्यक्षप्रमाणेन शिक्षणमधिगमश्च** – अध्यापक: प्रत्यक्षवस्तुभि:, आङ्गिकचेष्टाभि: प्रदर्शनपुरस्सरं अध्यापयति तदेतत् प्रत्यक्षप्रमाणेन शिक्षणं भवति । छात्र: यदा प्रत्यक्षप्रमाणेन अधिगच्छति स अधिगम: प्रत्यक्षप्रमाणाधारित: अधिगमो भवति । प्रत्यक्षप्रमाणेन जायमान: अनुभव:, प्रमा वा तत्तद्व्यक्त्याधीन:, प्रत्यात्मवेदनीयत्वात् न तदर्थम् अन्यत्प्रमाणमपेक्षितं यत: उक्तं **प्रत्यक्षं किं प्रमाणम्** इति अत: परम् अनुमानमधिकृत्य विचार्यते ,

**अनुमानप्रमाणेन अधिगम: -** ज्ञानार्जनस्य द्वितीयं साधनमनुमानप्रमाणम् तच्च अनुमानं द्विविधं स्वार्थानुमानं परार्थानुमानं , अनुमितिकरणमनुमानम् । परामर्श जन्यं ज्ञानम् अनुमितिः । व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्शः वह्निव्याप्यधूमवानयं पर्वतः इति ज्ञानं परामर्शः । तज्जन्यं पर्वतो वह्निमानिति ज्ञानमनुमितिः । साहचर्यनियमो व्याप्तिः । यत्र यत्र धूमः तत्र तत्र वह्निरिति साहचर्यनियमो व्याप्तिः। अनुमानं द्विविधं स्वार्थं परार्थं चेति । स्वार्थं स्वानुमितिहेतुः । महानसादौ धूमे वह्निव्याप्तिं गृहीत्वा पर्वतसमीपं गतः पर्वते धूमं पश्यन् व्याप्तिं स्मरति यत्र धूमः तत्र अग्निरिति । तदनन्तरं वह्निव्याप्यधूमवानयं पर्वतः इति ज्ञानमुत्पद्यते । अयमेव लिङ्गपरामर्श इत्युच्यते । तस्मात् पर्वतो वह्निमानिति अनुमितिरूत्पद्यते । तदेतत् स्वार्थानुमानम् । यदा च्छात्र: स्वयमेव अनुमानप्रमाणेन ज्ञानमर्जयति विषयमधिगच्छति तदेतत् स्वार्थानुमानं भवति।

**अनुमानप्रमाणेन शिक्षणम् -** यदा अध्यापक: बुद्धमवगतं ज्ञानम् अनुमानप्रमाणेम छात्रं सम्यग् बोधयितुं प्रवर्तते तदेतद् अनुमानं परार्थानुमानं भवति । परार्थानुमानं परानुमितिहेतु: यत्तु स्वयमेव धूमादग्निमनुमाय परप्रतिपत्त्यर्थं पञ्चावयववाक्यं प्रयुङ्क्ते तत्परार्थानुमानम् । अनुमानप्रमाणेन सम्पद्यमानो बोध: स्वार्थानुमानेन स्वानुभव: , परार्थानुमानेन परानुभव:च जायते , इह स्वानुभवस्तु अधिगमोऽस्ति , परार्थानुमानेन शिक्षणेन( अन्यस्मै बोधयितुं पञ्चभिर्वाक्यै: क्रियमाणो न्यास: शिक्षणम् ) तत:जायमान: परानुभव: अधिगम: छात्राणां भवति।

इह खलु किन्नाम शिक्षणमिति जिज्ञासायामुच्यते **शिक्षणं नाम अध्यापकनिष्ठं ज्ञानं छात्रेभ्य: प्रदानाय उपयुज्यमानम् अधिगमैकनिष्ठं निर्दुष्टं साधनं शिक्षणम्।** शिक्षणाय कश्चित् विधिरपेक्ष्यते। शिक्षाक्षेत्रे छात्रस्तरानुगुणं पाठ्यविषयानुगुणं प्रसङ्गानुगुणं शिक्षणाय भिन्नभिन्नविधय: सन्ति। को नु खलु विधिर्नाम्? विधीयते साध्यते लक्ष्यमनेन इति विधि:। विधिर्नाम पद्धति:, प्रक्रिया वा । छात्राणां विषयाधिगमसौकर्याय कल्पिता प्रणाली, प्रक्रिया वा । शिक्षाशास्त्रे शिक्षणस्य प्रधानं लक्ष्यं छात्रस्याधिगम: स च अधिगम: केनोपायेन अस्माभि: प्राप्तव्य: इति प्रथम: कल्प: ।

**न्यायशास्त्रस्य प्रधानं प्रयोजनम्** – अधिगन्तु: प्रतिपत्ति: बोधो वा अथवा सन्देहनिवारणम्। छात्रस्य सन्देहनिवारणाय यथार्थबोधाय परार्थानुमानाय तर्काधारेण पञ्चभिरवयवै: निर्णय: क्रियते, तत्त्वं बोध्यते । परबोधाय अवयवपदार्थ:अपेक्षित: अथ कोऽयमवयवो नाम ? इति जिज्ञासायामुच्यते

प्रतिज्ञा २. हेतु: ३. उदाहरणम्, ४. उपनय:, ५. निगमनम् इति पञ्चावयवा:[११] तर्कस्य पञ्चयुक्तिवाक्यानि वा।

**साध्यनिर्देश: प्रतिज्ञा** – यथा – पर्वतो वह्निमान्

**उदाहरणसाधर्म्यात्साध्यसाधनं हेतु:** -– यथा - धूमत्त्वात्

**साध्यसाधर्म्यात्तद्धर्मभावि दृष्टान्त: उदाहरणम्**—यथा- यत्र यत्र धूम: तत्र तत्र वह्नि: यथा महानस:

**उदाहरणाक्षेपस्तथेति उपसंहारो न तथेति वा साध्यस्य उपनय:** -– यथा- यथा महानस:तथा च अयं (पर्वत:)

**हेत्वदेशात्प्रतिज्ञाया; पुनर्वचनं निगमनम्** – यथा- तस्मात् (पूर्वोक्तात् धूमात् ) पर्वतो वह्निमान्

अनया पद्धत्या परार्थानुमानेन शिक्षणेन परबोध: सम्पाद्यते अयमेक: शिक्षणस्य उत्तमाभिगम:

♦ **योगशास्त्रे अधिगम: -** योग: समाधि: स च सार्वभौमचित्तस्य धर्म:, क्षिप्तं, मूढं, विक्षिप्तं, एकाग्रं, निरुद्धम् इति चित्तभूमय: आसु चित्तभूमिषु चित्तस्य द्विधा स्थिति: भवति **समाधिस्थिति:**, **व्युत्थानस्थिति:** इति क्षिप्तमूढविक्षिप्तभूमिषु चित्तस्य व्युत्थानस्थितिर्भवति, एकाग्रनिरुद्धभूम्यो: चित्तस्य समाधिस्थितिर्भवति । व्युत्थानस्थितौ चित्तस्य पञ्चवृत्तय: भवन्ति , ताश्च प्रमाणविपर्ययविकल्पनिद्रास्मृतय: इति आभि: पञ्चवृत्तिभि: बोधो जायते अयमेव अधिगमो भवति। प्रमाणवृत्त्या प्रत्यक्षानुमानशाब्दै: त्रिभि: प्रमाणै: तिस्र: वृत्तय: भवन्ति । आभि: वृत्तिभि: त्रिप्रकारकाधिगम: जायते, विपर्ययस्तु मिथ्याज्ञानम्, विपर्ययवृत्त्या जायमानं ज्ञानम् अयथार्थ: भवति अत: नायं यथार्थानुभव:, विकल्पवृत्तिस्तु वस्तुशून्या भवति केवलं शब्दमहात्म्यात् बुध्यते न तु परमार्थत: विद्यते । निद्रावृतावपि अनुभवो बोधो वा जायते । स्मृतिवृत्त्या अपि अधिगमो भवति संस्कारजन्य: अधिगमो विद्यते एवं पञ्चभि: वृत्तिभि: अधिगमो जायते । समाधिस्थितौ जायमान: अधिगमो विशिष्टो भवति , अयमधिगम: समाहितचेतसि जायते अत: अत्र द्विधा अधिगमो अनुभवो वा भवति एकाग्रचेतसि जायमान: बोध:, अनुभवो वा निरुद्धचेतसि जायमान: अनुभव:। एकाग्रनिरुद्धचित्ताभ्यां सम्प्रज्ञातासम्प्रज्ञातसमाधिभ्यां परमतत्त्वं बुद्ध्यते ।

**योगशास्त्रे अधिगमोपाया: -** अभ्यास:, श्रद्धा, तप: , ब्रह्मचर्यम्, विद्या, ईश्वरप्रणिधानम्, स्वाध्याय:

प्रशान्तचित्तम्, जिज्ञासा

**अभ्यास:** [१२] **- तत्र स्थितौ यत्नोऽभ्यास:** [१३], चित्तस्यावृत्तिकस्य प्रशान्तवाहिता स्थिति: तत्सम्पिपादयिषया तत्साधनानुष्ठानं तदर्थं वीर्यम् उत्साह: अभ्यास:, वस्तुतः ज्ञानं द्रढीयः आत्मसात् तदानीमेव भवति यदा तत् तपसा, ब्रह्मचर्येण श्रद्धया अधिगतं भवति। **स तु दीर्घकालनैरन्तर्येणसत्कारासेविता दृढभूमि:**[१४] - इति योगसूत्रभाष्ये तपसा ब्रह्मचर्येण विद्यया श्रद्धया च (आसेवितः) सम्पादितः अभ्यासः दृढभूमिः भवति इति वर्णितः। तपः अन्तरेण ब्रह्मचर्यमन्तरेण, श्रद्धामन्तरेण ज्ञानं प्राप्तुं न शक्यम्। कथंचित् प्राप्तमपि स्थिरं फलितं न भवति। तत्त्वज्ञानं तु सर्वथा दुष्करम्। अभ्यासो नाम अभीष्टज्ञानप्राप्त्यर्थं कौशलप्राप्त्यर्थं प्रयत्न: , तद्विषयिकी आवृत्तिर्वा ।

**श्रद्धा** – श्रद्धा चेतस: सम्प्रसाद: सा हि जननीव कल्याणी योगिनं पाति[१५]। इह सम्प्रसादो नाम मनसो निर्मलभाव: ।

(सम्प्रसाद: - मनस: निर्मलत्वम् -फ़लम् आनन्द:) यथा – निर्मले जले स्पष्टं प्रतिबिम्बं दृश्यते तद्वत् निर्मले मनसि स्पष्टं ज्ञानं भवति ) गीतायामपि एतदेवोच्यते

**श्रद्धावान् लभते ज्ञानं तत्परः संयतेन्द्रियः।**
**ज्ञानं लब्ध्वा परां शान्तिम् अचिरेणाऽऽधिगच्छति॥** गीता ४.३९

श्रद्धावान् जन एव ज्ञानं विद्यां वा प्राप्नोति। अश्रद्धो जनः किमपि साधयितुमर्जयितुं वा नार्हति। अश्रद्धयैव जीवने स्थैर्यं न भवति। अश्रद्धो सर्वथा संशयग्रस्तोभवति , संशयात्मा च विनश्यति। अतः उपनिषदि बहुत्र श्रद्धस्व सौम्य श्रद्धस्व इति उपदेशो दृश्यते।

**तत्पर:**[१६] – सन्नद्ध: - जिज्ञासु: जनो यावत्पर्यन्तं विद्यामध्येतुं तत्पर: सन्नद्धो वा न भवति तावत्पर्यन्तं विद्याधिगमो दुष्कर एव । **विद्याधिगमाय छात्रै: सदा सन्नद्धैर्भाव्यम्** ।

**संयतेन्द्रिय:** – जितेन्द्रिय: ब्रह्मचारी सुष्ठु विद्यामधिगन्तुं प्रभवति ।

**तप:** - द्वन्द्वसहनं तपः, तपः अन्तरेण लौकिकं वा पारलौकिकं वा ज्ञानं वा नहि किञ्चन प्राप्यते।

**विद्या** – विद्यया ज्ञानपूर्वकं विवेकेन अधिगम: सम्पादनीय: ।

**ब्रह्मचर्यम् -** विषयेभ्यः पृथग् भूय ब्रह्मणि ज्ञाने वा यदा संपृक्तः भवति जनः तदानीं यथार्थबोधो जायते। ब्रह्मचर्यम् इन्द्रियमनोनिग्रहः इन्द्रियाणां मनसः संयमनम्। विद्यार्थी ब्रह्मचर्यं चरेत् , य: ब्रह्मणि चरति स ब्रह्मचारी । ब्रह्म नाम वेदः, वेदो नाम ज्ञानम् । ब्रह्मनाम परमतत्वम्। इन्द्रियाणि मनः बुद्धिं संयम्य अन्तर्निहितां शक्तिं वेदाध्ययने अथवा परब्रह्मान्वेषणे निदधाति, विषयविकाररहितं पवित्रं जीवनं यस्य भवति स ब्रह्मचारी।

**जिज्ञासा** – अन्तेवासी जिज्ञासुर्भवेत्। ज्ञानं परमतत्त्वं ज्ञातुं यस्य इच्छा भवति स जिज्ञासुः। परमार्थतः जिज्ञासामन्तरेण लौकिकं ज्ञानमपि सम्यक् प्राप्तुं न शक्यम् तर्हि अध्यात्मसूक्ष्मज्ञानस्य का कथा अत एव वेदान्तदर्शनेऽपि प्रथमसूत्रे अथातो ब्रह्मजिज्ञासा [१७] इति जिज्ञासा पदप्रयोगो विद्यते अनेन ज्ञायते अन्तेवासिनः स्वीया जिज्ञासा यदि तीव्रा न भवति स्वयमेव स ज्ञातुं तत्परो न भवति तर्हि तस्मिन् ज्ञानं वा

तत्वज्ञानं फलितं न भवति।

**प्रशान्तचित्तः** –अन्तेवासी शमान्वितः प्रशान्तचितः स्यात्। स एव ब्रह्मविद्यायाः अधिकारी भवति। तथाच तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय येनाक्षरं पुरूषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्।[१८] वा

- **वेदान्ते अधिगमतत्त्वम् -**

**विद्याधिगमाय सोपानानि** – श्रवणम्, मननम् , निदिध्यासनम् , साक्षात्कारः एभिः उपायैः परमार्थतः विद्याधिगमो भवति, तत्वबोधो जायते। तथा च

**आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः**[१९]।

**आत्मतत्त्वस्य सदा श्रवणम्** . **मननम्** (चिन्तनम् ), **निदिध्यासनम्** . यदि क्रियते तर्हि परिणामत: **तत्त्वसाक्षात्कारः** जायते एव।

अनेन प्रमाणेन ज्ञायते यत् उपनिषदि अधिगमः बोधः इत्यस्य तात्पर्यं केवलं विषयपरिचयः तद् विषयकपरिचय:, ज्ञानं वा नास्ति अपितु अनुभूतिः प्रधाना विद्यते। तदानीमेव ज्ञानप्राप्तेः कृत्स्नता भवति। ज्ञानमात्मसात् भवेत्। अस्मद् अङ्गभूतं भवेत् तस्य तत्वतः अनुभूतिः स्यात् न तु शाब्दिकपरिचयः। तत्वज्ञानस्य तात्विकानुभूत्या अज्ञानस्यावरणं विदीर्य स्वस्मिन् ज्ञानस्वरूपेऽवस्थानम् आत्मानुभूतिः अहं ब्रह्मास्मि इत्यस्य तत्वतः बोधो जायते। यथार्थ अनुभूत्यैव मनुजस्य विचारे व्यवहारे च परिवर्तनं भवति। यथा –

**भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे**[२०]**।।**

- **महाभाष्ये अधिगमसोपानानि -**

महाभाष्ये पस्पशाह्निके भाष्यकार: पतञ्जलिराह **चतुर्भि; प्रकारैर्विद्योपयुक्ता भवति, आगमकालेन, स्वाध्यायकालेन, प्रवचनकालेन, व्यवहारकालेन**[२१] इति

**पदार्थः** - चतुर्भि:प्रकारै: - चतुर्धा, विद्या – अधीतज्ञानम् ,उपयुक्ता – फ़लवती , भवति – जायते , आगमकालेन – गुरो: सकाशात् ग्रहणकालेन , स्वाध्यायकालेन – स्वयमेव यदा मननपूर्वकमधीते तेन , प्रवचनकालेन – सहाध्यायिभि: चर्चाद्वारा,अथवा कनिष्ठेभ्य: अध्यापनद्वारा, व्यवहारकालेन - नित्यजीवने अधीतस्य विनियोगद्वारा।

गुरो: सकाशात् छात्र: यदा पठति स च काल: आगमकाल: , तत: परमधीतस्य पाठस्य स्वयमध्ययनं करोति स काल: स्वाध्यायकाल: , पश्चात् सहाध्यायिभि; पाठस्य चर्चां करोति स काल: प्रवचनकाल:, यदा अधीतस्य व्यवहारे आनयति प्रयुङ्क्ते तदा स काल: व्यवहारकाल: इत्युच्यते एवं चतुर्भि: उपायै: इह च्छात्रस्य विद्या परिपुष्टा, फ़लवती च भवति , छात्र: क्रमश: विद्याम् अर्जयति, रचयति, द्रढयति इति दर्शितम्।

अयं सन्दर्भः ज्ञानस्य अधिगमस्य क्रमिकस्तरान् तेषां प्रात्युपायान् सूचयति।

आगमकालः गुरुमुखाद् अध्ययनं - प्राथमिकसोपानं ज्ञानात्मकस्तरः

स्वाध्यायकालः स्वीयाध्ययनम्   -   द्वितीयं सोपानम् अवबोधत्मकस्तरः

प्रवचनकालः अधीतस्य उपस्थापनम्  -  तृतीयं सोपानम् चिन्तनस्तरः

व्यवहारकालः  - अधीतस्य व्यवहारे विनियोगः -  चतुर्थं सोपानं सर्जनात्मकस्तरः

अधीतस्य आत्मसात्करणम्, अङ्गीभूतस्य प्रसङ्गे दैनन्दिनजीवने व्यवहारेः प्रयोगः। नित्यजीवनेन सम्बन्धस्थापनम् अनेन अधीता विद्या फलवती भवति।

- **उपनिषदि अधिगमस्तराः -**

**भृगुर्वै वारूणिः। वरूणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। तस्मा एतत्प्रोवाच अन्नं, प्राणं , श्रोत्रं, मनो वाचमिति। तं होवाच। यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति। तद् विजिज्ञासस्व तद् ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा अन्नं ब्रह्मेति व्यजानात्। अन्नाद् ध्येव खल्विमानि भूतानि जायन्ते। अन्नेन जातानि जीवन्ति। अन्नं प्रयन्त्यभिसंविशन्ति इति तद् विज्ञाय। पुनरेव वरूणं पितरमुपससार**[२२]

**वारुणीविद्या** -- अस्मिन् आख्याने पितापुत्रयोः भृगुवरुणयोः गुरुशिष्ययोः ब्रह्मतत्त्वमधिकृत्य संवादः प्रवर्तते। वरुणः गुरुः तत्त्वज्ञानी अस्ति भृगुः जिज्ञासुः वर्तते। वरुणः सुखबोधाय शैक्षिकपरिस्थितिं निर्माति भृगुरपि तीव्रजिज्ञासया प्रवृत्तो भवति।

वरुणस्य पुत्र: भृगु: , पितरम् समुपेत्य ब्रह्मजिज्ञासां चकार , अन्तेवासिपुत्रस्य जिज्ञासामभिज्ञाय ब्रह्मतत्त्वाधिगमाय पञ्चषानि मौलिकतत्त्वानि नामग्राहं प्रस्तौति ।  तस्मै क्रमश: अन्नम्, प्राणं, मन:, विज्ञानम् , आनन्दं ब्रह्मेति उपदिदेश , यथा  अन्नं ब्रह्मेति। तत: परं भृगुः अन्नं सम्यग् विज्ञाय, अन्नं तु ब्रह्म भवितुं नार्हतीति संशयामापन्नः सन् पितरं पुनः ब्रह्म बोधयितुं निवेदयति तदा प्राणः, मनः विज्ञानम् क्रमश: ब्रह्म इति निश्चिनोति, पुनः संशयमापन्न: सन्  ब्रह्म उपदेष्टुं वरुणं निवेदयति । पुत्र: भृगु: अन्नमयकोशं प्राणमयकोशं,मनोमयकोशं, विज्ञानमयकोशम्, आनन्दमयकोशं तपसा क्रमश: एकैकश: कोशं विज्ञाय तत्र तत्र संशयमापन्न: सन् नेदं ब्रह्मतत्त्वमिति विज्ञाय पुन: ब्रह्म उपदेष्टुं वरुणं यदा निवेदयति वरुणः तदा आनन्दः ब्रह्मेति उपदिशति एतद् विदित्वा एतदेव ब्रह्मेति अन्ते अभिजानाति  अत्र ज्ञानस्य क्रमिकतया उत्तरोत्तरं स्तरं प्राप्य अन्ते ज्ञानस्य पराकाष्ठाम् अधिगच्छति । अन्ते स ब्रह्मभूतम् आनन्दमयकोशम् विज्ञातवान् एवं परं ज्ञानमधिगम्य  परतत्त्वमवाप ।

अत्र आचार्यः स्थूलाद् आरभ्य सूक्ष्मपर्यन्तं बोधयति। तद्यथा-

अन्नमयकोश: इति स्थूलशरीरस्य कृत्स्नबोधः तस्य परिणतिः शरीरे समत्वं निरोगिता च।

प्राणमयकोश: इति शरीरे विद्यमानानां प्राणानां परिचयः। प्राणनिग्रहः संयमनम्। प्राणायामेन च मलानां क्षयः विवेकप्राप्तिः। मनोमयकोश: इति मनसः परिचयः मनोनिग्रहः तदर्थम् उपायाः मानसिकशक्तीनां प्राप्तिः मनसः एकाग्रता विभूतिप्राप्तिः।

विज्ञानकोश: - अहंकारस्य नाश: तात्विकज्ञानम् अज्ञानस्य क्षयः ज्ञानप्राप्तिः ।

आनन्दमयकोश: - आत्मानुभूतिः आनन्दावाप्तिश्च।

- **भगवद्गीतायामधिगमोपायाः -**

**तद्विद्धि प्रणिपातेन परिप्रश्नेन, सेवया ।**
**उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः**[२३] **।।**

**प्रणिपातः -** अभिवादनादिसमर्पणभावना

**परिप्रश्नः -** जिज्ञासया पृच्छा

**सेवा** – गुरूणां वृद्धजनानां सेवा

एभिः त्रिभिः उपायैः ज्ञानमर्जयितुमर्हति विद्यापिपासुः ।

प्रश्नोपनिषदि पिप्पलादः प्रोवाच तपसा , ब्रह्मचर्येण , विद्यया, श्रद्धया च संवत्सरं संवत्स्यथ[२४] इति । तपः, ब्रह्मचर्यम् , विद्या, श्रद्धा इति एतानि तत्वानि ब्रह्मविद्याधिगमाय अत्यन्तं मूलभूतानि सन्ति।

तपः अन्तरेण लौकिकं वा पारलौकिकं वा ज्ञानं वा नहि किञ्चन प्राप्यते। अतः तपश्चरणीयम् ।

ब्रह्मचर्यम् - विषयेभ्यः पृथग् भूय ब्रह्मणि ज्ञाने वा यदा संपृक्तः भवति जनः तदानीं यथार्थबोधो जायते। ब्रह्मचर्यम् इन्द्रियमनोनिग्रहः इन्द्रियाणां मनसः संयमनम्।

श्रद्धा - श्रद्धावान् लभते ज्ञानम्। अश्रद्धो जनः किमपि साधयितुमर्जयितुं वा नार्हति। अश्रद्धयैव जीवने स्थैर्यं न भवति। अश्रद्धो सर्वथा संशयग्रस्तोभवति । **संशयात्मा विनश्यति**[२५]। अतः उपनिषदि बहुत्र **श्रद्धस्व सौम्य श्रद्धस्व**[२६] इति उपदेशो दृश्यते।

- **सांख्यशास्त्रे अधिगमोपायाः -**

साङ्ख्यशास्त्रे ज्ञानप्राप्तिहेतुत्त्वेन कतिपया उपाया:प्रोक्ताः तद्यथा ऊहः, शब्द;, अध्ययनं, सुहृत्प्राप्तिः, , दानम् ,

**ऊहः** - प्राक्भवीयाभ्यासवशात् तत्त्वस्य स्वयमूहनम्

**शब्दः** - अन्यदीयपाठमाकर्ण्य स्वयम् वा शास्त्रमाकलय्य यज्ज्ञानं जायते तत्

**अध्ययनम्** – शिष्याचार्यभावेन शास्त्राध्ययनात् ज्ञानम् ।

**सुहृत्प्राप्तिः** - स्वयमुपदेशार्थं गृहागतात् परमकारूणिकात् ज्ञानलाभः ।

**दानम्** – धनादिदानेन परितोषितात् ज्ञानलाभः ।

एभिः उपायैः ज्ञानप्राप्तिर्भवति ।

- **कौटिल्यार्थशास्त्रे अधिगमोपायाः -**

कौटिल्यार्थशास्त्रस्य कर्त्ता चाणक्यः महान् शिक्षाशास्त्री, दार्शनिकः, राजनितिनिपुणः, शास्त्रपण्डितः अवर्तत , अस्य अर्थशास्त्रस्य आरम्भे विनयाधिकरणे विद्याधिगमोपायाः वर्णिताः ते च शुश्रुषा श्रवणग्रहणधारणविज्ञानम् ऊहापोहतत्त्वाभिनिविष्टबुद्धिं विद्या विनयति नेतरम्[२७] –

शुश्रुषा- विदुषां गुरूणां सेवा परिचर्यादिकम्

श्रवणम् – गुरोः वचनानाम्, विद्योपदेशानां श्रवणम्

ग्रहणम् – श्रुतस्य, अधीतस्य ग्रहणम्

धारणविज्ञानम् – ग्रहीतस्य, अवगतस्य दृढतया धारणम्

ऊहापोह: - तर्कवितर्कौ

तत्त्वाभिनिविष्टबुद्धि: - तत्त्वेषु , शास्त्रेषु मनोनिवेश:, अनुरागो वा

पूर्वोक्तै: उपायै: विद्याधिगमो भवति।

**उपसंहार:** - संस्कृतशास्त्रेषु उपनिषत्सु विद्यमानानि शिक्षणाधिगमसम्बद्धप्रमाणानि,आदाय इह अधिगमतत्त्वस्य तदुपकारकोपायानां विचार: कृत:। अनेन शास्त्रेषु अभिवर्णितविचारान् आदाय साम्प्रतिकं शिक्षणाधिगमकर्म चारु सम्पादयितुं शक्यते। अत्र वर्णितविचारोत्थज्ञानम् ऐहिकामुष्मिकफ़लप्राप्तये नितरां प्रभवति नास्त्यत्र संशयलेश:।

**********

**सन्दर्भा: -**

1. वैशेषिकदर्शनम् – १.१.४
2. न्यायशास्त्रम्, वात्स्यायनभाष्यम्
3. शुक्लयजुर्वेद ४०/१४
4. तत्कर्म यन्न बन्धाय **सा विद्या या विमुक्तये**। आयासायापरं कर्म विद्याऽन्या शिल्पनैपुणम्॥
श्रीविष्णुपुराणम् - १-१९-४१॥
5. कठोपनिषद् प्रथमावल्ली - 4
6. गीता ४.३९
7. मनुस्मृति: २.७
8. बुद्धे: लक्षणम् - तर्कसंग्रह:
9. योगदर्शनम् 1.14
10. प्रत्यक्षलक्षणम् - तर्कसंग्रह:
11. पञ्चावयवा: , न्यायदर्शनम्
12. थार्नडाइक महोदयस्य त्रिषु अधिगमनियमेषु **अभ्यासस्य** नियमोऽपि विद्यते ।
13. योगदर्शनम् 1.13
14. योगदर्शनम् 1.14
15.व्यासभाष्यम् योगदर्शम् -
16. थार्नडाइक महोदयस्य त्रिषु अधिगमनियमेषु **तत्परताया:** नियमोऽपि विद्यते
17. . वेदान्तदर्शनम् 1.1
18. मुण्डकोपनिषद् 1.2.13

19. बृहदारण्यकोपनिषद् 4.5.6
20. मुण्डकोपनिषद् 2.2.8
21. महाभाष्यम्-पस्पशाह्निकम्
22. तैत्तिरीयोपनिषद् भृगुवल्ली 7.3.2.1
23. . गीता 4.34
24. प्रश्नोपनिषद् 2
25. गीता 4.40
26. छान्दोग्योपनिषद् 6.12.1
27. कौटिल्यार्थशास्त्रम् - 01.5.05

**सन्दर्भग्रन्था: -**


1. व्याकरणमहाभाष्यम्, भार्गवशास्त्री, चौखम्बा संस्कृत प्रतिष्ठान, दिल्ली।
2. काशिका ,आचार्य विजयपाल: विद्यावारिधि:, रामलालकपूर ट्रस्ट, रेवली, सोनीपत।
3. वाक्यपदीयम् ,पं. सूर्यनारायणशुक्ल, चौखम्बा संस्कृत संस्थान, वाराणसी।
4. व्याकरणतत्त्वविमर्श:, डॉ. श्रीधरमिश्र, जगदीशसंस्कृतपुस्तकालय, जयपुर।
5. अष्टाध्यायी, सम्पादक: पं. ब्रह्मदत्त जिज्ञासु, रामलालकपूर ट्रस्ट, रेवली, सोनीपत।
6. ऋग्वेदसंहिता, परोपकारिणी सभा, अजमेर।
7. संस्कृतविमर्शः, प्रियदर्शी ठक्कुरः, १९९०, राष्ट्रियसंस्कृतसंस्थान, नई दिल्ली।
8. तर्कसङ्ग्रहदीपिका, आचार्य आनन्द झा, हिन्दी ग्रन्थ अकादमी, लखनऊ,१९७६
9. पं. आशुबोधविद्याभूषण:,न्यायदर्शनम्, चौखम्बा संस्कृत प्रतिष्ठान, 2000
10. ढुण्डिराजशास्त्री, न्यायसिद्धान्तमुक्तावली, चौखम्बा संस्कृत प्रतिष्ठान, 1998
11. डा. सन्तोष मित्तल, संस्कृतशिक्षणम्, नवचेतना पब्लिकेशन्स्, जयपुर, 2006
12. डा. रा. देवनाथः,डा.भुवनेश उपाध्यायः,व्याकरणशिक्षणविधयः,भारतीयविद्यासंस्थान,वाराणसी, 1992.
13. जयदयाल गोयङ्का, भगवद्गीता, गीताप्रेस, गोरखपुर, 2005
14. डा. सुरेन्द्र, मनुस्मृतिः, आर्षसाहित्यप्रचार ट्रस्ट, दिल्ली, 1996
15. पं.उदयवीर,वैशेषिकदर्शनम्, गोविन्दराम हासानन्द, दिल्ली, 1995
16. एकादशोपनिषद , गोविन्दराम हासानन्द दिल्ली, 2005
17. सांख्यतत्त्वकौमुदी, पण्डित गजाननशास्त्री मुसलगांवकर, चौखम्बा संस्कृत प्रतिष्ठान, वाराणसी, 1998
18. कौटिल्यार्थशास्त्रम्, टि. गणपतिशास्त्री, चौखम्बा संस्कृत प्रतिष्ठान, वाराणसी, 1998
19. श्रीमद्भगवद्गीता , श्री जयदयाल गोयन्का, गीता प्रेस गोरखपुर, 1995
20. सांख्ययोगदर्शनम्, गोस्वामी दामोदरशास्त्री, चौखम्बा सम्स्कृत संस्थान, वाराणसी , १९९०

# अन्तर्जालाश्रित-शिक्षणाधिगमप्रक्रिया

**✍ डॉ. हरिप्रसादः के. ***

आधुनिके काले शिक्षायाः स्वरूपं, सञ्चालनरीतिः, उपयुज्यमानानि उपकरणानि, आचार्यच्छात्रलक्षणं चेति सर्वमपि पूर्ववत् नास्ति । विज्ञानस्य तन्त्रज्ञानस्य तन्त्रांशानाञ्च विकासेन साम्प्रतिकशैक्षिकप्रपञ्चः महत्परिवर्तनमवाप्नोत् ।

**साम्प्रतं शिक्षा कुत्र प्रवर्तते ?**

औपचारिकशिक्षा तु कक्ष्याप्रकोष्ठे साम्प्रतमपि प्रवर्तते । किन्तु अनौपचारिकशिक्षा कक्ष्याप्रकोष्ठं नावलम्बते इति स्पष्टमेव । अन्तर्जालाश्रिततन्त्रांशानां कारणतः स्वीडन्-प्रभृतिषु ऐरोप्यदेशेषु औपचारिकशिक्षायाः प्रवर्तनं कक्ष्याप्रकोष्ठात् सुदूरं नीता वर्तते । इत्युक्ते शीतकाले तेषु देशेषु षण्मासपर्यन्तं छात्राः विद्यालयं गन्तुमेव न पारयन्ति । अतः तेषाम् अध्ययनम् अवरुद्धं भवति । किन्तु साम्प्रतं इयं समस्या तत्रस्थैः नानुभूयते । यतो हि अन्तर्जालाश्रिताः तन्त्रांशाः छात्रान् अध्यापकांश्च इत्थम् उपकुर्वन्ति यत् ते विद्यालयम् अगत्वा एव स्वस्वगृहे स्थित्वा कक्ष्याप्रकोष्ठस्य शैक्षिकवातावरणं प्राप्तुमर्हन्ति । अन्तर्जाले Online कक्ष्याः साम्प्रतं प्रसिद्धिं प्राप्तवत्यः सन्ति ।

अतः **साम्प्रतं शिक्षा कुत्र प्रवर्तते ?** इत्यस्य प्रश्नस्य समाधानं परिवर्तितम् अस्ति । कक्ष्याप्रकोष्ठात् बहुदूरं गता इति अनेन स्पष्टं भवति ।

**पुरा - "आचार्यवान् पुरुषो वेद ।"** इति आसीत् स्थितिः । इत्युक्ते अध्यापकस्य अभावे शिक्षा न प्रवर्तते इति शिक्षाशास्त्रानुगुणं तात्पर्यं गृह्णीयाम । किन्तु साम्प्रतं तथा नास्ति स्थितिः । अन्तर्जाले भूरिशः दृश्यश्रव्यसामग्र्यः बहूनां पाठ्यक्रमस्थानां विषयाणाम् उपलभ्यन्ते । अध्यापकाभावेऽपि तेषाम् उपयोगेन **साम्प्रतम्** लक्ष्यं साधयितुं शक्यते ।

**पुरा – Conference Hall** इत्यत्र सम्मेलनं भवति स्म । किन्तु साम्प्रतं – **Conference Call** माध्यमेन सम्मेलनस्य अनुभवं प्राप्तुं शक्नुमः ।

पुरा निश्चिते समये एव कक्ष्यायां अध्यापकः श्रोतव्य आसीत् । साम्प्रतम् ( 24 X 7 ) इति सूत्रानुगुणं जगति यत्र कुत्रापि स्थित्वा यदा कदापि शिक्षकः पाठयितुमर्हति छात्रश्च श्रोतुमर्हति । अतः शिक्षा साम्प्रतं सदा सर्वजनलभ्या समभूत् ।

**कस्मात् हेतोः ?**

अन्तर्जालकारणात् इति साम्प्रतिकस्थित्यनुगुणं वक्तव्यम् । एतस्य अन्यान्यपि बहूनि कारणानि वर्तन्ते । शिक्षाप्रविधेरितिहासं पश्यामः चेत् इदं स्पष्टं भवति । तानि अन्यानि कारणानि इत्थं वर्तन्ते -

- **अभिक्रमितानुदेशनम्**

अभिक्रमितानुदेशनस्य जन्म एव अध्यापकस्याभावेऽपि छात्रः पाठ्यांशं स्वयम् अधीयान एव प्रेरणामपि प्राप्नुवन् अध्ययनकार्यं सम्पादयेदिति । एतस्य कारणतः यः पिपठिषुः विद्यालयं गन्तुं सौविध्यं वा

* *सहायकाचार्यः , शिक्षाशास्त्रविभागः, राष्ट्रियसंस्कृतसंस्थानम्, (मा.वि) राजीवगान्धीपरिसरः*

समयं वा न प्राप्नोति सोऽपि स्वीयम् अध्ययनं लीलया समापयितुमर्हति ।

- **EDUSAT -**

विंशतेः वर्षेभ्यः प्राक् केन्द्रसर्वकारेण विश्वविद्यालयेभ्यः शिक्षायाः प्रसाराय किञ्चित् सौविध्यं कल्पितम् । भारतीयबाह्याकाशसंस्थायाः माध्यमेन विशिष्टं शिक्षोपयोगिनं उपग्रहं नभसि निक्षिप्य विविधेभ्यः विश्वविद्यालयेभ्यः शिक्षाप्रसाराय तेजःपुञ्जानि (beam of Spectrum) प्रादीयन्त । यद्यपि बहुभिः विश्वविद्यालयैः एतस्य उपग्रहस्य सर्वकारस्य लक्ष्यानुगुणं उपयोगः न कृतः तथापि इयं योजना अग्रिमदिवसेषु अन्तर्जालाश्रितशैक्षिककार्यक्रमाणां विकासे कारणीभूता अभवत् ।

- **MOOCs -**

Massive Online Open Courses इति नाम्ना साम्प्रतं समग्रे जगति बहुषु विश्वविद्यालयेषु शैक्षिककार्यक्रमाः अन्तर्जालाश्रिताः सञ्चाल्यमानाः सन्ति । सहस्राधिकेषु विषयेषु पिपठिषवः जनाः अन्तर्जालमाश्रित्य एतेषु शैक्षककार्यक्रमेषु(Courses) प्रवेशं प्राप्य, अन्तर्जालाधारेणैव सुसज्जाः शैक्षिकसामग्रीः अधीत्य, अन्तर्जालमाध्यमेनैव परीक्षामपि सम्मुखीकृत्य, अन्तर्जालमाध्यमेनैव विश्वविद्यालयस्य प्रमाणपत्रमपि प्राप्तुं अत्र सुमहान् अवसरो कल्पितः ।

एतदतिरिच्य TED.COM, Khan Academy इत्याद्याः संस्थाः पिपठिषूणां शैक्षिकविकासाय विशिष्टान् कार्यक्रमान् सञ्चालयन्ति ।

अनौपचारिकशिक्षायाः निमित्तं ईदृशी व्यवस्था लोके विकासिता वर्तते इति तु स्पष्टम् । किन्तु औपचारिकशिक्षाव्यवस्थायां प्रविधेः कीदृशो विकासः समजनि इति किञ्चिदत्र विचार्यते । औपचारिकशिक्षाव्यवस्थायामपि शिक्षणाधिगमप्रक्रियायाः जटिलतायाः निवारणार्थं अधिकसौविध्यकल्पनार्थञ्च केचन तन्त्रांशाः विकासिताः । ते च यथा -

**Microsoft Teams**

**Kiddom**

**Beneylu**

**Moodle**

**Otus**

**Google Classroom** इत्यादयः । एतेषु अन्तिमौ द्वौ तन्त्रांशौ मया कक्ष्याशिक्षणे उपयुक्तौ । तयोः उपयोगविषये किञ्चित् विस्तरेण उच्यते ।

- **Otus -**

**Otus** इत्याख्यः तन्त्रांशः विद्यामानतन्त्रांशेषु अत्यधिकविकल्पवान् वर्तते । किन्तु अन्तर्जाले झटिति प्रतिक्रियाप्राप्त्यर्हत्वम् अस्मिन् तन्त्रांशे नास्ति । तन्त्रांशमेनमाश्रित्य यन्मया कक्ष्याशिक्षणं साधितं तस्य कानिचन पृष्ठानि अत्र पार्श्वे उदाहरणार्थं प्रदर्शितानि ।

Otus इत्यत्र,अध्येयविषयस्य आरोपणव्यवस्था, आरोपितविषयाणां विनिमयव्यवस्था , प्रश्नरचनाव्यवस्था विद्यमानायां प्रश्नरचनाव्यवस्थायां संरचितः प्रश्नः, संरचितप्रश्नानां निष्कासनव्यवस्था, परिणामविवरणम्, प्रश्नानाम् उत्तरं दत्तवतां चित्रात्मकविवरणम् इत्यादिविषयोपेतानि चित्राणि अत्र क्रमशः प्रदत्तानि।

## Google Classroom

तन्त्रांशोऽयं निश्चयेन शिक्षणाधिगमप्रक्रियायाम् अत्यन्तं उपकारकतन्त्रांशः अस्ति इति वक्तुं शक्नुमः। अस्मिन् तन्त्रांशे प्रवेशात् पूर्वम् अध्यापकानां अध्यापकत्वेन पञ्जीकरणं कर्तव्यं भवति । यान् छात्रान् उद्दिश्य अध्यापकः बोधयितुम् इच्छति तेषां सर्वेषां वैद्युतिकसङ्केतः अवश्यं स्यात् । तेषामपि पञ्जीकरणं अध्यापकः स्वयमेव कुर्यात् । छात्रेभ्यः पञ्जीकरणात्परं Google Classroom इत्यत्र प्रवेशं कर्तुं तन्त्रांशपक्षतः आह्वानम् अध्यापकेच्छया गच्छति । आह्वानप्राप्तेः परं छात्राः कक्ष्यायां प्रविश्य अध्येयविषयान् विन्दन्ति । शिक्षकः अत्र अध्येयविषयाणां लिखितसामग्रीः वा श्रव्यसामग्रीः वा दृश्यसामग्रीः वा विनिमातुमर्हति । छात्राः यत्र कुत्रापि स्थित्वा यदा कदापि एताः समग्रीः उद्धाट्य अध्येतुमर्हन्ति । छात्राणाम् अध्ययनात्परं तेषां परीक्षा सञ्चालयितुं शक्या अस्मिन् तन्त्रांशे । परीक्षाः वस्तुनिष्ठाः भवितुमर्हन्ति, अथवा निबन्धात्मिका वा भवितुमर्हन्ति । Unicode द्वारा टङ्कितः संस्कृतविषयोऽपि अत्र प्रदर्शनम् अर्हति । आङ्लमेव शरणं गच्छेम इति नास्ति नियमः । परीक्षायां प्रश्नानां वितरणमपि अध्यापकाधीनं भवति। यस्मै कस्मैचित् छात्राय शिक्षकः प्रश्नान् दातुमर्हति । यस्य कस्यापि छात्रस्य परीक्षां शिक्षकः पार्थक्येन कर्तुमर्हति । परीक्षार्थं समयनिर्धारणं कृत्वा प्रश्नपत्रं सज्जीकरोति चेत् तस्मिन् निर्दिष्टे एव समये प्रश्नपत्रं छात्रावलोकनयोग्यं भवति । अन्यस्मिन् समये प्रश्नपत्रं छात्राणां दृष्टिपथं नागच्छति । वस्तुनिष्ठपरीक्षाणां मूल्याङ्कनं स्वयं तन्त्रांश एव करोति । निबन्धात्मकपरीक्षाणां मूल्याङ्कनं शिक्षक

## Google Classroom














एव विधाय अङ्कान् अन्तर्जाले(तन्त्रांशे) एव आरोपयितुम् अर्हति । इत्थं तन्त्रांशेऽस्मिन् शिक्षकोपयोगितया छात्रोपयोगितया च बहवो हि विकल्पाः सन्ति । भाविशिक्षकाः एतद्विषये रुचिमन्तो भूत्वा अनुसरिष्यन्ति चेत् औपचारिकशिक्षायाः लक्ष्यं साधयितुं प्रविधिः कथम् प्रयोजनकारी इति ज्ञायते ।

सङ्गोष्ठ्यां कश्चन अध्यापकः एनं प्रश्नम् अप्राक्षीत् यत् ‘‘तन्त्रांशोऽयं परीक्षासञ्चालनोपयुक्तो वर्तते । शिक्षणाधिगमप्रक्रियायां उपयोक्तुम् अर्हो नास्ति’’ इति । वस्तुतः कथयाम चेत् तन्त्रांशोऽयं परीक्षासञ्चालनाय उपयुक्तो वर्तते इति स्पष्टम्, किन्तु पाठ्यसमग्रीणां विनिमयार्थं, परस्परसंवादार्थं, परीक्षार्थञ्च उपयुक्तः तन्त्रांशः इति अवगन्तव्यम् । किञ्च शिक्षणाधिगमप्रक्रिया प्रश्नोत्तरविधिना यावती सक्रिया प्रयोजनवती च भवति न तावदन्यविधिभिरिति समेषां नो शिक्षाविदाम् अनुभूतिरभिमतञ्च इति शम् ।

**********

**शास्त्रेषु निष्ठा सहजश्च बोधः प्रागल्भ्यमभ्यस्तगुणा च वाणी ।**
**कालानुरोधः प्रतिभानवत्तवमेते गुणाः कामदुधाः क्रियासु ।।**

मालतिमाधवम् 3 /88

**ज्ञानेन विद्यया चैव प्रज्ञां शश्वद्विवर्धयेत् ।**
**यस्य प्रज्ञामयं चक्षुश्चक्षुष्मान् स नरः स्मृतः ।।**

बुद्धचरितम्. 26/71

**त्रातारो देवा अधि वोचता नो**
**मा नो निद्रा ईशत मोत जल्पिः ।**
**वयं सोमस्य विश्वह प्रियासः**
**सुवीरासो विदथमा वदेम ।।**

ऋ.8 /48 /14

**अभयं मित्रादभयममित्राद्**
**अभयं ज्ञातादभयं पुरो यः ।**
**अभयं नक्तमभयं दिवा नः**
**सर्वा आशा मम मित्रं भवन्तु ।।**

अथर्व. 19/ 15/ 6

# शिक्षणाधिगमयोः मनोवैज्ञानिक-प्राविधिकतत्त्वानामनुप्रयोगः

**✍ डॉ. वेङ्कटरमणभट्टः***

इदं प्रधानशीर्षकमवलम्ब्य मदीयां चिन्तनसरणिं किञ्चिदुपस्थापयामि । वेदेषु उपनिषत्सु शास्त्रेषु च मनोविज्ञानप्रविधिशास्त्रयोः तत्त्वानि प्राचुर्येण समुपलभ्यन्ते । अन्तःक्रियाः, अधिगमः, अभ्यासः, अनुभवः, चिन्तनम्, स्मृतिः, सम्प्रेषणम् इत्यादयो अनेके विषयाः मनोविज्ञाने प्राविधिकशास्त्रे च बाहुल्येन चर्चिताः । तत्र तत्र अमीषामंशानां तत्त्वानि अपि प्रतिपादितानि । एतान् अंशान् अधिकृत्य पत्रमिदम् आलोकमातनुते ।

अन्तःक्रिया इति मनोविज्ञाने उपयुज्यमानं पारिभाषिकं पदम् । Interaction इति पदेन अभिधीयते । अन्तःक्रिया अन्तरा व्यवहारो न जायते । व्यवहारो नाम कार्यकलापः । छात्रेण क्रियमाणःकार्यकलापो वा व्यवहारपदेन व्यपदिश्यते । अयं कार्यकलापः शिक्षणसम्बध्दः । प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि इति नैयायिकानां पक्षे चत्वारि प्रमणानि वर्तन्ते । तत्र प्रत्यक्षप्रमाणमाद्यम् । तत्र किञ्चित्परिशील्यते । प्रत्यक्षं नाम ज्ञानमिति । प्रत्यक्षज्ञानमिति भावः । समेऽपि शास्त्रज्ञाः प्रत्यक्षप्रमाणमभ्युपगच्छन्तीति सर्वे भवन्तः संविद्रते। आत्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेन, ततः प्रत्यक्षमुत्पद्यते । चक्षुषा घटप्रत्यक्षजनने संयोगः सन्निकर्षः । इन्द्रियार्थसनिकर्षजन्यं ज्ञानं प्रत्यक्षम् । द्वाभ्यां चर्मचक्षुभ्यां घटं दृष्ट्वा अयं घटः इत्याकारकं ज्ञानं प्राप्नोति कश्चित् । अत्र काचित् प्रक्रिया जायते । सा अन्तःक्रिया इति नाम्ना व्यपदिश्यते । घटदर्शनपर्यन्तं घटोऽयमिति कस्यचित् ज्ञानं न भवति । अयमेव अधिगमपदवाच्यः भवति । अभ्यासेन अनुभवेन वा जायमानं सापेक्षतया स्थिरं व्यवहारपरिवर्तनम् एव अधिगमः भवति । अभ्यासः मुहुर्मुहुः परिशीलनम् । घटदर्शनात् पूर्वं घटरूपस्य पदार्थस्य अज्ञानात् घटदर्शनेन घटपदार्थस्य ज्ञानात् व्यवहारे परिवर्तनम् । केवलं अनुभवेनापि क्वचित् ज्ञानमुत्पद्यते यथा ज्ञानलक्षणप्रत्यासत्त्या सुरभिश्चन्दनखण्डः इति ज्ञानमवाप्नोति । दूरात् चन्दनखण्डं दृष्ट्वा सुरभिश्चन्दनखण्ड इति ज्ञानम् । तत्र अनुभवजन्यज्ञानं स्मृतिरित्युच्यते । लौकिकमुदाहरणं यथा मधुरा शर्करेति ।

प्रयोगमूलं हि मनोविज्ञानम् । मनोविज्ञाने सर्वेऽपि विषयाः प्रयोगमाध्यमेनैव समर्थिताः । समर्थनीयस्यार्थस्य समर्थनं करोति प्रयोगः । पावलाव्-थान्डीयिक्-स्किन्नर्-फ्रायिड् प्रभृतयः प्रयोगेणैव अधिगमसिद्धान्तान् प्रत्यपीपदन् । एवमेव शास्त्रेषु अपि अधिगमसम्बद्धाः बहवो हि विषयाः प्रयोगबलादेव प्रतिपादिताः । यथा साहित्यदर्पणे द्वितीयपरिच्छेदे अभिधानिरुपणावसरे जातः प्रयोगः स्मर्यते ।

"तत्र सङ्केतितार्थस्य बोधनादग्रिमाऽऽभिधा" इति । उत्तमवृध्देन मध्यमवृद्धमुद्दिश्य "गामानय" इत्युक्ते तं गवानयनप्रवृत्तमुपलभ्य बालोऽस्य वाक्यस्य सास्नादिमत्पिण्डानयनमर्थः इति प्रथमं प्रतिपद्यते, अनन्तरञ्च "गां बधान", "अश्वमानय" इत्यादावापोद्वापाभ्याम् गो शब्दस्य सास्नादिमानर्थः आनयनपदस्य च आहरणमर्थः इति सङ्केतमवधारयति ।

अत्र प्रयोजकः उत्तमवृद्धः समुत्पन्नसङ्केतज्ञानः । प्रयोज्यः मध्यमवृद्धः समुत्पन्नसङ्केतज्ञान एषोऽपि । अनुत्पन्नसङ्केतज्ञानस्तु बालः । एतयोः व्यवहारं परिशीलयति बालः । सः गोशब्दस्य

** सहायकाचार्यः , शिक्षाशास्त्रविभागः, राष्ट्रियसंस्कृतसंस्थानम्, (मा.वि) राजीवगान्धीपरिसरः*

सास्नादिमान् प्राणी इति अभिजानाति । आनयनशब्दस्य आहारणमर्थः इति जानाति । तस्य बालकस्य व्यवहारे परिवर्तनं जायते । मनोविज्ञाने अपि प्रयोगाः जायन्ते । प्रयोक्ता प्रयोज्यश्चेति द्वावेव भवतः । येन प्रयोगः क्रियते सः प्रयोक्ता, यस्योपरि प्रयोगः क्रियते सः प्रयोज्यः । 'प्रयोज्यनियोज्यौ शक्यर्थे ' इति पाणिनीयम् । अनयोः प्रयोगयोः किञ्चिद्वैलक्ष्यण्यं यथा – प्रयोज्यः अनुत्पन्नसङ्केतज्ञानः ।

नैकाः उपनिषदः प्रश्नोत्तरविधिमाध्यमेनैव प्रवर्तन्ते । प्रविधिशास्त्रे Instructional Technology इति वर्तते । अनुदेशनप्रविधिः इति अस्यां भाषायाम् । अभिक्रमिताधिगमः इत्यपि अन्यः विषयः अत्र वर्तते । प्रश्नः उत्तरं प्रश्नः उत्तरम्, अवान्तरप्रश्नः तस्य उत्तरम् इति प्रक्रिया अत्र प्रवर्तते । महाभाष्यस्य पस्पशाह्निके इदम् अवलोकयामः वयम् । अथ शब्दानुशासनम् । केषां शब्दानाम् । लौकिकानां वैदिकानाम् । अथ गौरित्यत्र कः शब्दः .... ॥

प्रश्नोत्तरविधिमाध्यमेन अभिक्रमिताधिगमः दृष्टिपथमायाति । भृगुवल्ल्यां वारुणिः पितरं पृच्छति ब्रह्मणः स्वरूपं किमिति । साक्षात् ब्रह्म किमिति पिता अनुक्त्वा तपसा ब्रह्म जानीयात् इति तं सूचयति । तद्यथा – "*भृगुर्वै वारुणिः। वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तद्विजिज्ञासस्व । तद्ब्रह्मेति । स तपोऽतप्यत । स तपस्ताप्त्वा* " ॥

सम्प्रेषणमिति प्रविधिशास्त्रस्य कश्चिदंशः । सम्प्रेषणं नाम अस्माकं भावनानां विचाराणाम् आदान -प्रदानम् । सम्प्रेषणे शाब्दिकम् अशाब्दिकशञ्चेति । द्वैविध्यं वर्तते । शास्त्रेषु अशाब्दिकसम्प्रेषणस्य बहूनि उदाहरणानि उपलभ्यन्ते । काव्येषु यत्र यत्र अनुभावाः भवन्ति तत्र सर्वत्रापि अशाब्दिकं सम्प्रेषणमिति तर्कयामो वयम् । कुमारसम्भवे यथा –

**हरस्तु तावत् परिवृत्तधैर्येश्चन्द्रोदयारम्भ इवाम्बुराशिः।**
**उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥** [1]

अयं हि अनुभावः मन्मथस्य बाणप्रयोगः शिवे सञ्जातः । शिवः कैलासे तपः आचरति । पार्वत्या तपोनुकूला सेवा क्रियमाणा आसीत् । बिम्बफलाधरोष्टाम् उमां वीक्ष्य स्वनेत्राणि शिवः उन्मीलयमास । अयं हि अनुभावः शिवे सञ्जातः । केन कारणेन शिवः नेत्राणि व्यापारयामास इत्यमु भावं पार्वती व्यज्ञासीत् । परस्परं तयोः सम्प्रेषणं जायते । रसनिष्पत्तौ यथा अनुभावः कार्यत्वेन स्वीक्रियते आलङ्कारिकैः तत्रास्माभिः शिक्षाशास्त्रज्ञैः अशाब्दिकं सम्प्रेषणमिति अङ्गीक्रियते ।

**एवं वादिनि देवर्षौ । पार्श्वे पितुरधोमुखी ।**
**लीलाकमलपत्राणि गणयामास पार्वती ॥** [2]

लज्जया पार्वती आत्मानं जुगोप । स्वमनसि वर्तमानं ओमित्यङ्गीकाररूपं भावं कमलपत्राणि गणयित्वा प्राचीकषत् । तस्याः भावं पिता व्यज्ञासीत् । एवं तयोः सम्प्रेषणं चेष्टया एव जातमिति अशाब्दिकं

1. कु. सं 3 /67 श्लोकः
2. कु.सं 6/84 श्लोकः

सम्प्रेषणम् अभ्युपगन्तव्यम् । प्रसङ्गेऽस्मिन् अन्योऽपि श्लोकः कुमारसम्भवस्य यथा-

**विवृण्वती शैलसुतापि भावमङ्गैः स्फुरद्बालकदम्बकल्पैः ।**
**साचीकृता चारुतरेण तस्थौ मुखेन पर्यस्तविलोचनेन ॥** [3]

आत्मनः मुखमपाकृत्य लज्जया रतिभावं पार्वती प्राचीकटत् इति विशेषः । अनेन शिवपार्वत्योः सम्प्रेषणं जायते । अप्पय्यदीक्षितस्य कुवलयानन्देऽपि नैकानि उदाहरणानि पश्यामः । तत्र अन्योन्यालङ्कारस्य श्लोको यथा-

**यथोर्ध्वाक्षः पिबन्त्यम्बु पथिको विरलाङ्गुलिः ।**
**तथा प्रपापालिकापि धारां वितनुते तनुम् ॥ (कुवलयानन्दः)**

मार्गे गच्छन् कश्चित् पथिकः पिपासया पीडितः जलं पातुम् इच्छति । जलपानोत्सुकस्सन् प्रपाम् उपसरति । तत्पालिका काचित् सुन्दरी युवती वर्तते । सापि एनं दर्शनोत्सुका सती धारातनूकरणद्वारा जलं पाययति । सोऽपि ताम् अवलोकयितुकामः अङ्गुलिविरलीकरणद्वारा ऊर्ध्वाक्षस्सन् मन्दं मन्दं जलं पिबति । अनयोरुभयोर्व्यापारभ्यामत्र परस्परं उपकारः प्रतीयते इति अन्योन्यालङ्कारः । चिरकालं यावत् द्वयोरपि दर्शनेच्छा धारातनूकरणाङ्गुलिविरलीकरणभ्यां सिध्यतीति अशाब्दिकं सम्प्रेषणं न निराकर्तुं शक्यते ।

**********

**परिशीलितग्रन्थाः—**

1. साहित्यदर्पणः
2, कुवलयानन्दः
3. तैत्तिरियोपनिषत्
4. मन्त्रमन्दारः
5. शैक्षिकप्रविधिः
6. तर्कसंग्रहः
7. अष्टाध्यायी

3. कु.सं 6/84 श्लोकः

# शिक्षणाधिगमयोः प्राविधिकतत्त्वानां प्रयोगे गुणदोषविमर्शः

✍ डॉ. कुमार *

**प्रस्तावना (Introduction) –**

यदा हस्तेन दीपस्य स्पर्शं करोति तदा दीपः ज्वलनकारीति ज्ञानं शिशोर्भवति । माता च स्पष्टं बोधयति यत्स्पर्शयोग्यमिदं वस्तु नेति शिशुम् । शिशुश्च दीपस्पर्शेन दग्धहस्तः तदारभ्य आमरणं साक्षाद्दीपस्य स्पर्शं कर्तुं नोत्सहते । एवमेव काश्चन चेष्टाः जीवने नित्यस्मरणीयाः अविस्मरणीयाश्च भवन्ति । आधुनिककालेऽस्मिन् बाल्याद् बहवः विषयाः आजीवनं ज्ञाता भवन्ति । यथा -

* पिञ्जस्य नोदनेन दण्डदीपो वा कश्चिद् विद्युद्दीपः ज्वलति अथवा विद्युत्प्रवहति तन्त्रौ इति ज्ञात्वा न कदाप्येतद् विस्मर्यते ।
* दूरवाणीचित्रमुद्रितस्य पिञ्जस्य नोदनेन दूरवाण्या अन्यस्य सम्पर्को भवतीति ज्ञत्वा सदा सम्पर्कसाधनाय तथैव क्रियते ।
* इदानीन्तनदूरवाण्याः केवलं स्पर्शेन किञ्चित् परिवर्तनं मुखपुटे भवतीति शिशुः अधिगच्छति ।

**का एषा प्रक्रिया ? किमस्याः वैज्ञनिकं नाम ? किमस्याः महत्वम् ? कश्चास्याः स्पष्टार्थः ?**

नन्वुच्यते खलु प्रक्रियैषा व्यवहारपरिवर्तनात्मिका प्रत्येकं जीवस्य सततं चलति जीवने इति । मनोवैज्ञानिकास्तावत् नामकरणमकुर्वन्नस्याः प्रक्रियायाः अधिगमः इति । ज्ञानसम्पादनपूर्वकं जीवस्य व्यवहारपरिवर्तनानयनप्रक्रिया खल्वयमधिगमः । तर्हि किञ्चिच्चर्चयामः अधिगमस्वरूपम् ।

**अधिगमस्य स्वरूपम् (Structure of Learning) -**

* अधिगमः सततमाजीवनं प्रचाल्यमाना प्रक्रिया ।
* अधिगमः ज्ञानवर्धकप्रक्रिया ।
* अनुभवजन्यः भवति अधिगमः ।
* अधिगमः अभ्यासेन जायमानः ।
* अधिगमः स्थिरव्यावहारसम्पादनात्मकप्रक्रिया ।
* अधिगमः परिवर्तनानयनप्रक्रिया ।

**अधिगमः कथं भवति?**

* अधिगमः पौनःपुन्येन अभ्यासेन जायते ।
* अधिगमः जीवने प्राप्यमाणानुभवैः सम्भवति ।
* अधिगमः शिक्षणेन भवति ।
* प्रशिक्षणेन अधिगमः भवितुमर्हति ।
* आधुनिकतन्त्रज्ञानस्य प्रयोगस्य युगेऽस्मिन् अधिगमः आधुनिकप्रविधिना अपि भवितुमर्हति ।

** संविदाध्यापकः, शिक्षाशास्त्रविभागः, राष्ट्रियसंस्कृतसंस्थानम्, (मा.वि) मुम्बई परिसरः।*

**शिक्षणम् (Teaching )**

शिक्षणमेका मानवस्य जीवने अत्यन्तं महत्वपूर्णा प्रक्रिया भवति। सर्वेषु जीवजन्तुषु विशिष्टस्यास्य मानवस्य शिक्षणं विशेषरूपेण प्राप्तुमवसराः सन्ति। अतोऽयं सुसंस्कृतः भवितुमर्हति। शिक्षणं विना तु पशुतुल्यः एव स्यात् स मानवः इति सुभाषितकाराः प्रावदन् स्वीयसदुक्तिषु। यथा –

**वस्त्रेण वपुषा वाचा विद्यया विनयेन च।**
**वकारैः पञ्चभिर्हीनः नरो न याति गौरम्॥**

एवमेव इदमप्युक्तं यत् - **विद्याविहीनः पशुभिः समानः** इति। अतः विद्यायाः अर्थात् शिक्षायाः बहुमहत्त्वं वर्तते। शिक्षाप्राप्तेः या बोधनप्रक्रिया वर्तते तच्छिक्षणमित्युच्यते। तस्य शिक्षणस्य स्वरूपं किम् ? कीदृशी प्रक्रियैषा इति अधोलिखितबिन्दवः स्पष्टीकुर्वन्ति।

**शिक्षणप्रक्रिया (Process of Teaching )**

* अध्यापककेन्द्रितप्रक्रिया भवति शिक्षणम्। Teacher Oriented Process.
* शिक्षणं पाठ्यपुस्तकाधारितप्रक्रिया भवति। Study Material Oriented.
* सम्प्रेषणात्मिकप्रक्रिया भवति शिक्षणम्। Communicational Process.
* ज्ञानसम्पादनप्रक्रिया भवति शिक्षणम्। Knowledgeable Process.
* निर्देशनदानात्मकप्रक्रिया भवति शिक्षणम्। Guidance Process.
* भवति शिक्षणम् उत्तमसमाजनिर्माणप्रक्रिया। Society making Process
* भवति शिक्षणम् उत्तमनागरिकनिर्माणप्रक्रिया। Making Good Citizens.
* राष्ट्रनिर्माणप्रक्रिया भवति शिक्षणम्। Nation making Process.
* प्रशिक्षणात्मकप्रक्रिया भवति शिक्षणम्। Training Process.

**शिक्षणाधिगमयोः स्रोतांसि (Educational Resources Support materials) –**

शिक्षणाधिगमयोः प्रक्रियायामनेकेषां स्रोतसां प्रयोगः उपयोगश्च भवति। तानि स्रोतांसि (उपकरणानि) अधिगमं प्राप्तुं सहायकानि भवन्ति। तेषां कनिचन प्रसिद्धानि कालघट्टेऽस्मिन् बाहुल्यमुपयुज्यमानानि अत्राधः उल्लिखितानि। यथा -

| | | |
|---|---|---|
| Audio CD's | - | ध्वनिमुद्रिकाः। |
| Video CD's | - | सान्द्रमुद्रिकाः। |
| Radio | - | आकाशवाणी। |
| TV | - | दूरदर्शनम्। |
| Books | - | ग्रन्थाः / पुस्तकानि। |
| E - Books | - | विद्युन्मनग्रन्थाः / ई - पुस्तकानि। |
| Internet | - | अन्तर्जालम्। |

Mobile - चलद्दूरवाणी / दूरभाषः।

Computer - सङ्गणकम्।

एवं रूपेणाधुनिकानि प्राविधिकानि उपकरणानि नूनं शिक्षणप्रक्रियायाम् अधिगमप्रक्रियायां च उपयुक्तानि भवन्ति । विद्यालयेष्वधुना प्राविधिकज्ञानं विना पठन-पाठनप्रक्रिया नैव भवति । शिक्षणाधिगमयोर्द्वयोरपि सूचनासम्प्रेषणप्रविधिः (ICT) बहुमुख्यं पात्रं निर्वहति। विद्यालयेषु कथं शिक्षणं प्रचलतीति ज्ञातुं च शक्नवन्ति। शिक्षणस्य बलवर्धनाय पारदर्शकतासम्पादनाय च सूचनासम्प्रेषणप्रविधिः (ICT) बहुसहायं करोति। अत एवोक्तम् आङ्ग्लभाषायां यथा –

* **Schools are transformed with high ICT capability in leadership, management, Teaching and Learning.**
* **Digitally literate teachers inspire a new generation of students to build their knowledge of the digital world.**
* **Students are immersed in digital technologies as essential tools for learning.**

एवमधुना सर्वेषु विद्यालयेषु सूचनासम्प्रेषणप्रविधेः उपयोगः बहुधा क्रियते। अतः तस्य प्रयोगे बहवः गुणाः सन्तीति वर्णयितुं शक्नुमः । तर्हि अवलोक्यतेऽत्र शिक्षणाधिगमयोः प्राविधिकतत्त्वानां प्रयोगे के गुणाः सन्तीति।

**शिक्षणाधिगमयोः प्राविधिकतत्त्वानां प्रयोगे गुणाः -**

* शिक्षणं प्रभावपूर्णं भवेत्।
* अध्येतॄणाम् अध्ययनस्वातन्त्र्यम्।
* सम्प्रेषणप्रक्रिया सुलभा।
* भाविजीवननिर्वहणे छात्राणां निर्मणम्।
* न्यूनधनसाध्यशिक्षणम् (Tuition and Text books)
* प्रभावात्मकनिर्देशनदानम् (अध्यापकानां कृते उपायाः)
* नूतनविधीनामाविष्काराय प्रोत्साहः।
* असंख्याकस्रोतसाम् उपलब्धिः।
* अत्याधुनिकज्ञानदानं सञ्चयश्च।
* भारयुक्तस्यूतानां न्यूनता।
* अनेकेषां स्रोतसां संरक्षणम्।
* सप्रयोगं वैज्ञानिकमध्ययनम्।
* मनोवैज्ञानिकरीत्याधिगमः भवितुमर्हति।
* स्वानुभवस्य कृते बहवोऽवसराः।

*कृत्वाधिगमास्य महत्त्वम् ।

इत्थं प्राविधिकतत्त्वानां प्रयोगे बहवो गुणाः सन्तीति वैज्ञानिकाः ज्येष्ठाः वर्णयन्ति । परन्तु केचन दोषा अपि पुरतः आविर्भूताः भवन्ति । **सर्वत्रैव विचारेण भोजनेऽप्यवर्तनम्** इति सुभाषितकारोक्तरीत्या सर्वत्र प्रविधेः प्रयोगं कुर्मश्चेत् कदाचित् दोषाः अपि पुरतः सन्निविष्टाः भवन्ति । तर्हि के तस्य दोषाः शिक्षणाधिगमयोः सन्तीति किञ्चिद् विमृश्यतेऽत्र ।

**शिक्षणाधिगमयोः प्राविधिकतत्त्वानां प्रयोगे दोषाः -**

* शिक्षणे इच्छाशक्तेः अभावः न्यूनता च ।
* अध्येतॄणां कौशलेषु न्यूनता ।
* शिक्षणस्योपरि ऋणात्मकभावः । Negative views on Teaching
* छात्राणाम् असंस्कृतभाविजीवननिर्वहणम् ।
* पर्याप्ततया यन्त्राणामभावः ।
* सर्वत्र यन्त्रप्रयोगस्यासम्भवनीयता ।
* प्रभावात्मकनिर्देशनदानस्य उपहुतयः । ( Lack of effective guidance)
* शिक्षकाणां व्यक्तित्वगौरवादिनाशः । (Lack of Teacher’s Respect)
* अन्तर्जाले सर्वस्यानुपलब्धिः । (Unavailability of Contents)
* वञ्चना सुलभा भवेत् अन्तर्जालेन । (Cyber cheatings)
* आधुनिकतासंरक्षणे धनव्ययः । (Costly Updating)
* मूलकौशलनाशः जन्मजातशक्तीनां नाशः वा ।
* सांस्कृतिक-आध्यात्मिक-साम्प्रदायिकाद्यंशानां नाशः ।
* शारीरिकश्रमस्य अभावः ।
* महिलानां व्यायामशालायाः (GYM) नाशः ।

**निष्कर्षः** –

अस्मिन् सन्दर्भे विवक्षामि यत् तन्त्रज्ञानस्य प्रयोगेण मानवाः विशेषरूपेण उपकृताः सन्तीति तु सत्यम् । प्रत्येकं मानवस्य कार्यबाहुल्यात् समयाभावस्य कालघट्टेऽस्मिन् प्राविधिकतत्त्वानि बहुशः सहायमाचरन्ति । कष्टसाध्यानि बहूनि कार्याणि सुलभतया सम्पादितानि भवन्ति । बहुषु क्षेत्रेषु अस्य प्राविधिकशास्त्रस्य महत्त्वं वरीवर्ति । अतः आधुनिककालेऽस्मिन् अस्यावश्यकता नितरां वर्तते । प्रायशो मानवाः अमुं प्रविधिमवलम्ब्य जीवन्तः सन्ति । अतः शिक्षणाधिगमयोः प्राविधिकांशानां गुणाः भूरिशो विद्यन्ते ।

सन्दर्भेऽस्मिन् विशेषतया वक्तुमिच्छामि यत् मानवाः अलसाः जाताः वर्तन्ते । प्रतिदिनं बहवः शारीरिककार्याणामभावात् अस्वस्थाः जायमानाः वर्तन्ते । प्राचीनकालात् साम्प्रदायिकरूपेण यः

जीवनक्रमः प्रचलितः आसीत् सः प्रायः वैज्ञानिकः इति अधुना भासते । अस्माकं पूर्वजाः स्वस्थाः शतं वर्षाणि प्राविधिकतत्वानामभावेऽपि जीवितवन्तः ।

आधुनिककालेऽस्मिन् बालाः क्रीडाङ्गणे क्रीडन्तः न्यूनाः दृश्यन्ते । पूर्वं क्रिकेट्-क्रीडा क्रीडाङ्गणे भवति स्म । परमधुना सङ्गणकेन वा दूरवाण्या क्रीडन्ति बालाः । विभिन्नप्रकारकक्रीडाः बौद्धिक-मानसिक -शारीरिकविकासाय पुरान्विष्टाः आसन् । परमधुना तादृश्यः क्रीडाः न्यूनाः सञ्जाताः ।

अन्ततो गत्वा स्वाभिप्रायं प्रकटयितुमिच्छामि यत् शिक्षणाधिगमयोः प्राविधिकतत्त्वानां महदुपयोगो वर्तते चेदपि दोषाभिर्भावः सम्भाव्यते । अतः यत्रावश्यकता, यावदावश्यकता च प्रविधेः स्यात्तत्रैव प्रयोगः भवेदिति । एवं रूपेण प्राविधिकतत्त्वानां सङ्क्षेपेण साररूपेण च गुणदोषविमर्शो विहितः ।

**********

**सन्दर्भग्रन्थ सूची -**


1. संस्कृतशिक्षणम्, प्रो. पतेह सिंह प्रो. च. ल. न. शर्मा
2. शैक्षिकप्रविधिः, डा. रमाकान्तमिश्रः, चौखम्बा सुरभारती प्रकाशनम्, २००६
3. शिक्षा में नवचिन्तन, प्रो. रीता अरोडा, शिक्षा प्रकाशन, जयपुर, २००८
4. New Trends in Education, M. S. Singh, Adhyayan Publishers, 2007
5. Educational Technology, Dr. A. R. Sharma, Sri Vinod Pustak Mandir, Agra-2, 2015
6. I C T in Education Recent Trends, Dr. S. S. Patil, Dr. Jagannaath K. Dange, Dr. Geeta C., PrateekShaa Publication, 2012
7. अन्तर्जालपुटानि (www.google.com)


**यास्ते शिवास्तन्वः काम भद्रा**
**याभिः सत्यं भवति यद् वृणीषे ।**
**ताभिष्ट्वमस्माँ अभिसंविशस्वा-**
**न्यत्र पापीरप वेशया धियः ।।**

अथर्व. 9/ 2 /25

# व्यक्तित्त्वम्

✍ डॉ. विनोदकुमारशर्मा *

**Personality is the dynamic organization within the individual of those Psychophysical systems that determine his unique adjustment to his environment. Gordon Allport**

विपूर्वक-अञ्जधातोर्निष्पन्नम् व्यक्तिरिति इदं पदम्, यत् वस्तु अभिव्यक्तं सत् दृष्टिगोचरो भवति तत् कथयति। घटपटादयोऽजीवाः पदार्थाः पशुपक्ष्यादयः सजीवाः पदार्थाश्च अस्य पदस्याभिधेया भवन्ति। सर्ववाचकमपि इदं पदमत्र मनोविज्ञाने प्रकरणवशात् मानवव्यक्तिरेवाभिदधाति। तथा च व्यक्तिपदेन पृथक् स्थितो मानवः अभिप्रेयते। तस्य यो भावः वर्तते असाधारणः स एव व्यक्तित्वपदेनोच्यते।

मेषैः सह परिचयहीनानामस्माकम्, शाव्दलेषु शाद्वं चरन्तः सर्वेऽपि मेषाः समाना एव भान्ति। मेषत्वजातिं दृष्ट्वा इमे मेषा इति जानीमः। मेषपालस्तु स्वकीयस्यैकैकस्यापि मेषस्यासाधारणं धर्मं (चिह्नं) अपि जानाति। अत एव संभूय चरतां स्वमेषाणां अन्यमेषाणां च मध्ये स्वकीयान् मेषान् सायं पृथक्कर्तुं शक्नोति सः। एवं एकैकं मेषं पृथक सूचयितुं यो धर्मो वर्तते तस्य धर्मस्य व्यक्तित्वम्, व्यक्तिः अथवा पृथगात्मकता इति नाम। अमरकारः, **जातिर्जातं च सामान्यं व्यक्तिस्तु पृथगात्मता** इत्याह। व्यक्तिशब्दः, धर्मिवाचित्वेन धर्मवाचित्वेनापि दृष्टः। अथापि स्पष्टप्रतिपत्त्यर्थं व्यक्तित्वमिति पदमेवात्र धर्मवाचित्वेन उपयुज्यते।

लोके जनाः व्यक्तित्त्वम् उदाहरन्ति। समाजे राष्ट्रे व्यक्तित्त्वं पश्यन्ति। चरित्रं प्रशसन्ति। समाजे मूल्यानि स्थापयितुम् आदिकविना वाल्मीकिना आदिकाव्यं रामायणं यदा रचितं तदा मुनिपुङ्गवं नारदं पृच्छति यथा –

**तपः स्वाध्यायनिरतं तपस्वी वाग्विदां वरम्।**
**नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुङ्गवम्॥**
**कोऽन्वस्मिन् साम्प्रतं लोके गुणवान् कश्च वीर्यवान्।**
**धर्मज्ञश्च कृतज्ञश्च सत्यवाक्यो दृढव्रतः॥**
**इक्ष्वाकुवंशप्रभवो रामो नामा जनैः श्रुतः।**
**नियतात्मा महावीर्यो द्युतिमान् धृतिमान् वशी॥**

लक्षाधिकाब्दाः गतानुगतिकतया गताः परन्तु श्रीरामचन्द्रस्य व्यक्तित्त्वम् अधावधि प्रासङ्गिकं सान्दर्भिकं चास्ति।

श्रीमद्भगवद्गीतायां भगवता श्रीकृष्णेन शोभनव्यक्तेः स्वरुपं निरूपितम् –

** संविदाध्यापकः, शिक्षाशास्त्रविभागः, राष्ट्रियसंस्कृतसंस्थानम्, (मा.वि) मुम्बई परिसरः।*

**युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।**

**युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ।।**

तत्रैव स्थितप्रज्ञस्य स्वरूपम् अपि वर्णितम् –

**स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ।**

**स्थितधीः किं प्रभाषेत किमासीत् व्रजेत किम् ।।**
**प्रजहाति यदा कामान्सर्वान्पार्थ मनोगतान् ।**
**आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ।।**
**दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।**
**वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ।।**
**यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम् ।**
**नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ।।**

रघुवंशमहाकाव्ये दिलीपं वर्णयन् कालिदासःविरुद्धगुणानामपि तस्मिन् संकलितत्त्वं कथयति –

**ज्ञाने मौनं क्षमा शक्तौ त्यागे श्लाघाविपर्ययः ।**

**गुणाः गुणानुबन्धित्वात् तस्य सप्रसवा इव ।।**

जगति जातः एकैकोऽपि मानवः इतरमानवसाधारण गुणात् काश्चित् दधदपि, स्वासाधारणानपि काश्चन धर्मान् धत्ते एव । एवं व्यक्तौ मानवे स्थिताः ये साधारणा असाधारणाश्च गुणाः ते तं अन्येभ्यो मानवेभ्यः पृथक् कृत्वा प्रदर्शयन्ति इति तेषां धर्माणां समुदायः एव मानवगतव्यक्तित्वेन अवगम्यते ।

पदनिष्पादनप्रक्रियायां ज्ञातायामपि व्यक्तित्त्वस्य वास्तविकं स्वरूपमधिकृत्य लक्षणादिभिरपि ज्ञातव्यमेव । आङ्ग्लेय्याम् एतत्समानार्थकं पदं पेर्सनालिटि (personality) इति वर्तते । इदं पदं पेर्सोना (persona) इति ग्रीकभाषापदात् निष्पन्नम् । पूर्वं नटाः स्वगृहीतपात्रानुगुणं मुखावरणम् (mask) किमपि धृतवन्तः । मुखावरणवाचि इदं पदं पश्चात् तत्पात्रगुणवाचि अभवत् । कालक्रमेण, मानवानां ये असाधारणा गुणा वर्तन्ते तद्वाचि जातम् ।

व्यक्तित्त्वस्य लक्षणं दुर्वचम् । आलपोर्ट (Allport) नामा मनोविज्ञानी कश्चित् व्यक्तित्त्वं स्वकीयग्रन्थे पञ्चशता लक्षणैः लक्षितवान् । अस्य पदस्यार्थस्तु विपुलो वर्तते । मानवस्य शोभनमाकारं क्वचित् सूचयति । क्वचित् दक्षतामपि । क्वचित् मानवगतान् विशिष्टान् धर्मान । एकैकोऽपि मानवः स्वसाधारण्या प्रक्रियया कार्यं करोति,अन्यैः सह व्यवहरति च । एवं क्रियमाणः व्यवहारः मानवस्य व्यक्तित्त्वं प्रकाशयितुमलं भवति । मानवेषु केचन भीताः । केचन निर्भीकाः । केचनाग्रहिणः सन्तः स्वाभिप्रायमेव परेषु

निधातुं प्रयतमानाः । केचन तु माध्यस्थ्यमवलम्ब्य तूष्णीं वर्तमानाः । केचन स्वाज्ञाभङ्गातितिक्षवः । केचन सर्वदा क्षमावन्तः । केचन कदर्याः, केचनोदाराः । मानवाः यथा एवं विधा जगति वर्तन्ते तथा कक्ष्यायामपि बहवो विद्यार्थिनः विभिन्नगुणा वर्तेरन् । यदि एकैकस्यापि विद्यार्थिनः व्यक्तित्त्वमवगतं स्यात्तर्हि,अस्मिन् सन्दर्भेऽयं विद्यार्थी एवमेवाचरेदिति निश्चप्रचं वक्तुं शक्यं स्यात् ।

सङ्ग्रहणैवं व्यक्तित्त्वमधिकृत्य वक्तुं युक्तम् – मानवः परिपूर्णतया यच्छीलो वर्तते तच्छीलत्त्वमेव तदीयं व्यक्तित्त्वमिति लक्षणं अभिधातुं साम्प्रतम् । मानवस्य शारीरसंस्थान-मनः-परिपाक-सांवेगिकावस्थानां तदीयानुभवज्ञानवृत्यभ्यासादिनां पुञ्जं विषयीकुर्यादिदं पदम् । तथा च बहुभिः कारणैः निवृतमिदं व्यक्तित्त्वम् मनोविज्ञानानुगुणं नरस्य कृत्स्नां सत्तां सूचयति ।

अन्यानि च कानिचन लक्षणानि विज्ञानिभिरादृतानि परिशील्यन्ते । कस्यापि मानवस्य, व्यवहारस्य प्रकारः (Mode of Behaviour) यः वर्तते तस्य प्रकृतिविशेष (Trait) इति नाम । वुड्वर्थ महोदयः व्यक्तित्त्वम् तस्य चिन्तनाभ्यासेन, वाचा, रुच्या, अभिरुच्या, कार्यकरणशैल्या, जीवनमधिकृत्य तदादृतेन भावेन च सूच्यते इति च ।

आलपोर्टमहोदयाभिमतं लक्षणमिदम् मानवगताः केचन शारीरमानसधर्माः अभ्याससंवेगादयः प्रकृतिविशेषाः परिवेषानुगुणं मानवेन कर्त्तव्यं असाधारणम् सामञ्जस्यं तत्तसमये निश्चिन्वन्ति । एषां धर्माणां येन क्रियाशीलैकसूत्रत्त्वम् आपाद्यते तस्य व्यक्तित्त्वमिति नाम इति ।

व्यक्तित्त्वं नाम नैको गुणः अथवा धर्मः । किन्तु बहूनां प्रकृतिविशेषाणां (Traits and attitudes) समुदायः तादृशसमुदायात् निष्पन्नः कश्चन भावविशेषो वा इत्यायातम् ।

स्थिरचित्तत्वम्, उत्साहः, मृदुस्वभावः, कारुण्यम्, उत्तरदायित्वम्, साहसम्, मैत्री, धैर्यम्, दास्यबुद्धिः, अधिकारप्रियत्वम्, विषादशीलत्वम्, कठिनचितत्वम्, पृथग्वर्तित्वम्, कल्पनालोकसञ्चारित्वम्, संशयशीलत्वम् इत्येते मानवप्रकृतिविशेषेषु केचन । एते एव स्वकीयविषयभेदेन मात्राभेदेन च अभिवृत्तयः (Attitudes), प्रकृतिविशेषाश्च (Traits) व्यपदिश्यन्ते । अष्टादशसहस्रसंख्याः प्रकृतिविशेषाः निर्देष्टुं शक्या इति आल्पोर्ट कथयति ।

एतेषु गुणा केचन परस्परं विरुद्धाः । केचन तु परस्परमविरुद्धाः । क्षमा कोपश्च विरुद्धौ भावौ । अथाप्यनयोः सुश्लिष्टत्वं कर्तुं शक्यम् ।

- **व्यक्तित्ववर्धने मूलकारणानि -**

शारीरमानसधर्माणां फलभूतं व्यक्तित्वमिति यद्यपि ज्ञातम् । अद्यापि एषां धर्माणां वर्धने अन्यान्यपि कानिचन कारणानि वर्तन्ते । वंशधर्मः, परिवेषश्च मुख्ये कारणे भवतः । मानवस्य शारीरं संस्थानं माता-पितृभ्यां प्राप्यते । गम्भीराकृतिः नरः नीचभावनां विना वर्तते । वामनः विकलाङ्गश्च नीचभावनां प्राप्य बहूनां पुरतः आगमनेऽपि लज्जावान् भवेत् । शरीरस्थितेभ्यो ग्रन्थिभ्यो निस्सृतानां द्रवाणामपि व्यक्तित्त्वनिर्धारणे

महत् स्थानं वर्तते। कस्यापि अतिकामुकत्त्वम्, अन्यस्य विरागित्त्वम् इति इदमुभयमपि इदानीं ग्रन्थिकार्यत्वेन वर्ण्यते शरीरतन्त्रनिष्णातै।

एवं परिवेषोऽपि व्यक्तित्वे कारणं भवति । कुटुम्बस्थितिः मातापित्रोः संस्कृतिमत्वम्, कुटुम्बवातावरणे प्रीतिपूर्णत्वम्, शालायां सुहृदामुपाध्यायानां च प्रीतिप्राप्तिः, विद्या, जनसमाजः इत्येते सर्वेऽपि व्यक्तित्वे कारणानि। यद्येतानि समीचीनानि भवन्ति तर्हि व्यक्तित्त्वमपि समीचीनं स्यात्। कुटुम्बे कलहः, अप्रीतिः, दुःसहवासः, दुर्मैत्री, दुरुपाध्यायाः इत्यादयः बालानाम् असमीचीनव्यक्तित्वे कारणानि भवन्ति। बाल्ये एव समीचीन व्यक्तीत्वप्राप्त्यर्थं बाला उपकर्त्तव्या उपाध्यायैः।

- **व्यक्तित्त्वप्रभेदाः -**

जगति यावन्तो मानवाः सन्ति तावन्तः व्यक्तित्त्वप्रभेदाः वर्तन्ते । अथापि, यथा नैयायिकाः जगति स्थितान् सर्वानपि पदार्थान् सप्तधा व्यभजन् तथा विज्ञानिनोऽपि व्यक्तित्वं स्वाभिमतधर्मानुसारेण व्यभाक्षुः। भगवान् गीतायां सत्त्वरजस्तमोरुपगुणभेदेन तद्वन्तो मानवाः सात्त्विकाः, राजसाः, तामसा इति त्रेधा विभेजे। आयुर्वेदीयाश्च वातपित्तकफरुपधातुत्रयं पुरस्कृत्य व्यक्तित्त्वं अवर्णयन्। ज्योतिश्शास्त्रविदः जन्मराश्यनुगुणं व्यक्तित्त्वं द्वादशधा कल्पयन्ति।

प्राचीनकाले ग्रीसदेशे स्थितः हिप्पोक्रेट्स् (Hippocrates, 400 BC) नामकः भिषक् शरीरधातूनां स्वभावविशेषान् पुरस्कृत्य चतुर्धा मानवान् विभजते स्म।

पैत्तिकः Choleric – अयं क्रोधशीलः स्यात्।

विषादीMelanchalic– विषदनशीलः।

श्लैष्मिकः Phlegmatic– स्वापशीलः, तन्द्रालुः।

सुप्रत्याशी Sanguine - उत्साहवान्, हास्यप्रियः भवति।

विलियमजेम्सनामकः विज्ञानी मृदुमनसः(Tender-minded) कठिनचिताः (Tough-minded) इति मानवान् द्वेधा व्यभाक्षीत । मृदुमनसः शास्त्राध्ययनादिषु व्यापृता भवन्ति, कठिनचित्तास्तु कार्यकरणे कुशला वर्तन्ते इत्याह।

क्रेशमर (Kretschmer 1888-1964) नामकः जर्मन्देशीयः आधिभिषक् शारीरं निमित्तीकृत्य व्यक्तित्वसिद्धान्तं कमपि कथयति –

कृशकायाः Asthenic

तुन्दिलाः Pyknic type

युङ्गमहाशयश्च, बहिर्मुखा Extroverts, अन्तर्मुखाः (Introverts) इति द्वेधा मानवान् वर्गीकरोति । स्प्रेंगर (Spranger) नामा विज्ञानी मानवान् तत्तत्स्वभावानुगुणं षोढा (1909) विभजते । ते एते भवन्ति –

सैद्धन्तिकाः The Theoretical

आर्थिकाः The Economic

कलारसिकाः The Acsthetic

सामाजिकाः The Social

नैतिकाः The Ethicals

धार्मिकाः The Religious

शेल्डन (Sheldon) नामा कश्चन विज्ञानी शरीरसंस्थानानुगुणं मानवानां व्यक्तित्त्वं निश्चिनोति स्म । केषाञ्चन उदरादिकम् अतिमात्रं विशालं वर्तते । एते विशालोदरा इति निर्देष्टुमर्हाः । सुखप्रिया भवन्ति स्म । केचन कृशाङ्ग वर्तन्ते । एते चिन्तनशीलाः भवन्ति । केषाञ्चित् मांसलत्वं स्यात् । एते साहसप्रियाः कार्येषु व्यग्राः भवेयुः ।

**********

**सन्दर्भग्रन्थाः –**


रामायाणम् – महर्षिवाल्मीकिः ।

श्रीमद्भगवद्गीता (भीष्मपर्वणि) महाभारतम् – महर्षि वेदव्यासः ।

रघुवंशमहाकाव्यम् – महाकविकालिदासः ।

शिक्षामनोविज्ञानम् – वे. श्री. वेङ्कटराघवाचार्यः ।

# संस्कृतभाषाधिगमे मोबाइलसहकृतभाषाधिगमस्य अनुप्रयोगः

✍ **डॉ. सचिनकुमारः ***

***शोधसारः** ( Abstract)*

*मोबाइलसहकृताधिगमः अनौपचारिकता सर्वव्यापकता सहजता चेत्येताभिः विशेषताभिस्सह वैयक्तिकाधिगमस्य प्रक्रियायाः क्षमतारूपेण ज्ञायते । यद्यपि सङ्गणकस्यापेक्षया मोबाइलमाध्यमेनाधिगमे समायाधिकः गच्छेत्, किन्तु अधिगन्तृभ्यः समयस्थानयोः स्वातन्त्र्यस्याधिकाऽनुभूतिः भवति, येन ते यदा कदापि यत्र कुत्रापि भूत्वा अवकाशकाले द्वितीयभाषामधिगच्छेयुः । मोबाइलसहकृतभाषाधिगमः (MALL) भाषाधिगमे मोबाइलप्रविधेः उपयोगसम्बन्धिताधिगमः वर्तते । मोबाइलसहकृतभाषाधिगमे (MALL) अधिगन्तृभ्यः अधिगमसामग्रेः प्राप्त्यर्थं कक्षाकक्षे उपवेशनस्य सङ्गणकोपयोगस्य चावश्यकता न भवति । वस्तुतः मोबाइलसहकृतभाषाधिगमः (MALL) समयस्थानयोर्सन्दर्भे भाषाधिगमस्य बाधाभ्यः एकम् आदर्शसमाधानमिति मन्यते ।*

*शोधपत्रेऽस्मिन् मोबाइल-अधिगमस्य विविधपक्षैस्सह केषाञ्चन अनुप्रयोगानाम् उदाहरणानां माध्यमेन अधिगन्तृभ्यः अस्य गुणदोषयोः विवेचनं क्रियते । अस्यान्तर्गतं द्वितीयभाषारूपेण संस्कृतभाषाधिगमे मोबाइलयन्त्रोपयोगस्य लाभानां प्रदर्शनस्य प्रयत्नं क्रियते । पत्रेऽस्मिन् मोबाइलसहकृतभाषाधिगमस्य शब्दावली, श्रवणम्, व्याकरणम्, क्षेत्रम्, ध्वनिविज्ञानं पठनबोधश्चेत्येतेषां क्षेत्राणां विवेचनं क्रियते ।*

***सङ्केतशब्दाः** ( keywords )*

*ई-अधिगमः, मोबाइलसहकृतभाषाधिगमः* (MALL), मोबाइलप्रविधिः, द्वितीयाभाषाधिगमः, निस्तन्त्रसञ्चारः (वायरलेसकम्यूनिकेशन)

## भूमिका

विश्वस्मिन्विश्वे नवोदितप्रविधिसहकृतोपकरणानि तीव्रगत्या वर्धमानानि वर्त्तन्ते, निस्तन्त्रसञ्चारप्रविधिविषयेप्यत्र नास्ति कश्चिद् अपवादः । यतोहि उच्चक्षमतायाः मोबाइलदूरवाणी मानवजीवनस्य सर्वेषु क्षेत्रेषु विस्तृताः अस्ति, अत एव इदं निस्तन्त्रगणकीयोपकरणं शीघ्रमेव प्रत्येकं देशस्य सर्वेषु नगरीयग्रामीणक्षेत्रेषु सर्वसुलभं भवेदिति आशा क्रियते । इदमेव कारणमस्ति यत् एतादृशं व्ययसाध्यं परिष्कृतञ्चोपकरणं जनसामान्ये व्यापकसुलभतया विभिन्नसन्दर्भेषु ई-अधिगमस्य परिदृश्यं परिवर्तयति । वस्तुतः मोबाइल-अधिगमः ई-अधिगमस्य अग्रिमयुगस्योपकरणं मन्यते । मोबाइल-उपकरणम् उपलब्ध-अधिगमोपकरणानां विकल्पः नास्ति, परञ्च तेन नूतनक्षमतायाः नूतनवातावरणे अधिगमविस्ताररूपेण साहाय्यं भवति। यद्यपि अधिगमस्य सर्वाः सामग्र्यः गतिविधयश्च मोबाइल-उपकरणेभ्यः उपयुक्ताः न सन्ति । मोबाइल-अधिगमः अधिगमक्षमतादृष्ट्या सहजता, अनौपचारिकता, वैयक्तिकता, सर्वव्यापकता इत्यादिवैशिष्ट्ययुक्तः भवति । एतादृशाधिगमः दीर्घकालं यावत् कार्यकरणस्य परिणामस्वरूपेण अवकाशकालस्याभावस्यानुभूतौ प्रबलतया भवति । एतादृशवातावरणे व्यस्तजनाः

** अतिथि-अध्यापकः, शिक्षाशास्त्रविभागः, राष्ट्रियसंस्कृतसंस्थानम्, (मा.वि) मुम्बई परिसरः।*

पारम्परिककक्षाऽऽधारितपाठ्यक्रमेभ्यः समयदानस्यापेक्षया नूतनसामग्रीमधिगन्तुं पोर्टेबल-उपकरणानां प्रयोगः क्रियते।

अथात्र अधिगमवातावरणे मोबाइल-उपकरणस्योपयोगे कानिचन महत्त्वपूर्णानि कारकाणि भवन्ति। एकस्य मोबाइल-उपकरणस्य भौतिकविशेषतायाम् आकारभाराभ्यां सह इनपुट-आउटपुटक्षमतायां कीपैड-टचपैड-दृश्यफलकाकृतिध्वनिविषयकानि च कारकाणि परीक्षणीयानि भवन्ति। शिक्षार्थिनः अधिगमकौशलं, मोबाइल-उपकरणेन सह तस्य पूर्वज्ञानानुभवौ तथा मोबाइलमाध्यमेनाधिगमं प्रति तस्य व्यवहारः एतादृशमोबाइल-आधारितकार्याणामुत्पादनस्य गुणवत्तायां महत्त्वपूर्णभूमिकां निर्वहति।

**मोबाइल-अधिगमस्य लाभाः सीमानश्च**

सर्वेषु आधुनिकसञ्चारोपकरणेषु मोबाइलयन्त्रं 'ई-मेल' अथवा 'चैट' इत्यनयोरपि अधिकः प्रभावपूर्णः सञ्चारमाध्यमः वर्तते, यतः उपकरणमिदं प्राविधिकसीमाभिस्सहापि एकेन उत्तमशिक्षणोपकरणरूपेण कार्यं कर्तुमर्हति। एतादृशशिक्षणोपकरणेन सह शिक्षार्थी स्वकीयसञ्ज्ञानात्मकस्थित्याधारेण स्वीयात्मीयस्थितौ अधिगमस्य प्रक्रियां प्रगतिञ्च नियन्त्रयितुमर्हति। कक्षायां सङ्गणकस्य अथवा ई-कक्षायाः माध्यमेन अधिगमेन शिक्षार्थी कक्षेतरवातावरणे गृहे वैयक्तिकसङ्गणकस्य ऑनलाइन-ऑफलाइनप्रयोगाधिगमे अक्षमः भवति। यद्यपि मोबाइल-अधिगमः एम -अधिगमः वा शिक्षार्थिभ्यः भ्रमणकाले यानादिषु, गृहाद्बहिः अंशकालिककार्यात्परमित्यादिषु च अधिगमस्यावसरान् प्रयच्छति, वस्तुतः एम-अधिगमेन ते यत्र कुत्रापि सर्वदा अधिगन्तुमर्हन्ति।

मोबाइल-उपकरणस्य पोर्टेबिलिटी तथा कनेक्टिविटी मुख्यमिदं वैशिष्ट्यद्वयं भवति। कनेक्टिविटीसन्दर्भे मोबाइलयन्त्रस्य निर्माणं तथा भवेत्, यस्मिन् निस्तन्त्रसञ्चारसुविधया अधिगमजालस्थानेषु संयोजनस्य सञ्चारस्य च क्षमता भवेत्, अपि च मोबाइलसन्देशः (एसएमएस) मोबाइल-ईमेल इत्याभ्यां सह अधिगमसामग्र्याः सर्वसम्मतोपयोगस्य सौविध्यं भवेत्। पोर्टेबिलिटी शिक्षार्थिभ्यः मोबाइलयन्त्रं स्थानान्तरणस्य अधिगमसामग्र्याः विनिमयस्य सौविध्यं / सामर्थ्यं प्रददाति। 'क्लोफर'प्रभृतयः मोबाइलयन्त्रस्याधोलिखितगुणान् वर्णयन्ति –

I. पोर्टेबिलिटी – न्यूनाकृतिभारयोः कारणेन विविधस्थलेषु उपकरणानां स्थानान्तरणं कर्तुं शक्यते।
II. सामाजिकान्तःक्रियाशीलता – मोबाइलयन्त्रमाध्यमेन अन्यशिक्षार्थिभिस्सह सहयोगः प्रदत्तानां विनिमयश्च।
III. सन्दर्भसंवेदनशीलता – मोबाइलयन्त्रेषु प्रदत्तानां संकलनं तथा समसामयिकस्थानसमययोः सन्दर्भे विशिष्टप्रतिक्रिया दातुं शक्यते।

IV. वैयक्तिकता – वैयक्तिकाधिगन्तृभ्यः गतिविधीनां समवायस्य अनुकूलनं भवितुमर्हति।

व्यावसायिकतायाः युगेऽस्मिन् व्यापारिकप्रवृत्तेः व्यापकप्रभावेन मोबाइलयन्त्रस्य लोकप्रियतायां वृद्धिर्जाता, तथा इदं अधिगमसन्दर्भे शिक्षार्थिभ्यः संसाधनतन्त्रांशयोः प्रदानस्य शिक्षकस्य आवश्यकतान् पूरयति । अस्येतरम् अन्यनिस्तन्त्रोपकरणानां लैपटॉप-सङ्गणकादीनां तुलनायां प्रायः अधिकांशमोबाइलयन्त्रेषु अन्तर्जालब्राउजरसुविधया सह मोबाइलयन्त्रम् अपेक्षाकृतं व्ययसाध्यं वर्तते।

**मोबाइल-अधिगमस्योदाहरणानि**

सम्प्रति अनेकक्षेत्रेषु निस्तन्त्रसञ्चारप्रविधे अनुप्रयोगः क्रियमाणोऽस्ति । एषा निस्तन्त्रनियन्त्रणव्यवस्था अधिगमक्षेत्रे विविधसामग्रीणामधिगमेन सह भाषाकौशलाधिगमेऽपि प्रयुज्यते। मोबाइल-अधिगमः कक्षायां कक्षेतरस्थलेषु भवितुमर्हति । औपचारिकरूपेण मोबाइलयन्त्रं लघुसमूहेषु सहयोगपूर्वकाधिगमार्थं प्रभावपूर्णसौविध्यसम्पन्नं भवति । यद्यपि एतादृशाधिगमे उपकरणेन गत्यात्मकक्रियार्थं न किमपि कार्यं भवति, तथापि अधिगमेऽस्मिन् अधिगन्ता मोबाइलयन्त्रमाध्यमेन अधिगमक्रियायाः विशिष्टप्रारूपार्थं निर्मितसमूहस्य सदस्यैस्सह घनिष्टान्तःक्रिया-वार्तालाप-परिचर्चादीनाम् अवसरान् प्राप्नोति । अधिगन्ता तथा तस्य शारीरिकक्रियायाः मध्ये लैपटॉप-सङ्गणकयोः प्रयोगेन कदाचिदेव एतादृशान्तःक्रिया जायेत।

मोबाइल-अधिगमप्रविधिः कक्षेतरगतिविधीनां सम्पादनाय अधिकोपयोगी वर्तते। अनेन जायमानाः गतिविधयः वास्तविकजगतेन साक्षात्सम्बन्धितानां प्रयोगानामधिगमे सामर्थ्यं जनयन्ति। कक्षाकक्षाद्बहिः मोबाइलयन्त्रमाध्यमेन अधिगमः शिक्षार्थिनः अवकाशकालस्य सर्वोत्तमोपयोगस्य लाभं प्रयच्छति, अपि च छात्राः गच्छन्तोऽपि स्वकीयाधिगमकौशलानि वर्धयितुमहर्हन्ति । शिक्षायां निस्तन्त्रप्रविधेः उपयोगे एसएमएस-आधारिताधिगमः अपरः कश्चिद् विकासस्तरः वर्तते । यस्मिन् कक्षाकक्षाद्बहिः आवश्यकलिखितसन्देशप्राप्त्या अधिगमे साहाय्यं भवति, तथा च अनेन शिक्षकस्य मोबाइलप्रविध्याधारितप्रायोगिकानुभवैरपि शिक्षार्थिनः लाभान्विताः भवन्ति।

मोबाइल-अधिगमक्षेत्रे क्रीडाऽऽधारिताधिगमः अन्यः कश्चिद् प्रकल्पः वर्तते । यस्मिन् अधिगमसामग्र्यः भौतिकवातावरणसन्दर्भे समेकीकृतरूपेण निर्मिताः भवन्ति । एतादृशवातावरणे अधिगमगतिविधयः मोबाइलप्रविधेः उपयोगसौविध्ययुक्ताः भवन्ति। यश्च ज्ञानस्य वास्तविकजगतः मोबाइलक्रीडायाः आभासिकजगतश्च मध्ये योजकरूपेण कार्यं करोति। एम-अधिगमक्रीडायाः उपयोगः द्वितीयभाषाकौशलानां - शब्दभण्डारः, उच्चारणम्, व्याकरणम्, श्रवणपठनावबोधक्षमता, वर्तनीशुद्धिः

इत्यादीनां शिक्षणार्थमपि कर्तुं शक्यते । 'कैनी'महोदयस्य मते मोबाइलयन्त्रं सर्वव्यापकता, सर्वसुलभता, व्यावहारिकोपयोगिता, निस्तन्त्रता चेत्येतेषां गुणानां माध्यमेन अधिगमाय एकम् आदर्शमञ्चम् उपस्थापयति।

**मोबाइलसहकृतभाषाधिगमः**

मोबाइलयन्त्रस्य आविष्कारसमये ख्री. १९७३ तमेऽब्दे न केनापि चिन्तितं स्याद्, यत् मोबाइलयन्त्रमिदं जनसाधारणस्य दैनन्दिनजीवनस्य अभिन्नमङ्गं भविष्यतीति । अस्माकं जीवने मोबाइलयन्त्रस्य महत्त्वपूर्णस्थानत्वेन भाषाधिगमक्रियासु अस्य प्रयोगस्यावश्यकता सञ्जाता । वर्तमानसमये मोबाइलयन्त्रं तत्सदृशान्यहस्तचालनसञ्चारोपकरणानि च सर्वत्र दूरवाणी, लिखितसन्देशः, ई-मेल, वीडियोचैट, वेबसर्फ़िंग, गीतध्वनिश्रवणम्, वस्तुक्रयणमित्यादिकं यत्किमपि कर्तुं प्रयुज्यते । एतादृशविशेषताभिस्सह मोबाइलयन्त्रमधुना शिक्षायाः भाषाधिगमस्य च माध्यमरूपेण विकस्यमानमस्ति, तथा चात्र अस्य उपयोगकर्तारः शिक्षकाः छात्राश्च वातावरणमिदं शिक्षां सर्वसम्मतरूपेण व्यापकं कर्तुं प्रयतमानास्सन्ति । अपि च अन्तर्जालस्योद्भवेन मुक्त-दूरस्थशिक्षाभ्यां विश्वस्य सर्वेषु भागेषु अधिगमप्राप्तिः सम्भवा जाता ।

मोबाइल-सहकृतभाषाधिगमे (MALL) भाषाधिगमे मोबाइलप्रविधेः उपयोगः क्रियते । छात्राः सर्वदा कक्षाकक्षे द्वितीयभाषामधिगन्तुं नेच्छेयुः । ते यत्र कुत्रापि किमपि नूतनमधिगन्तुं मोबाइलयन्त्रोपयोगस्य अवसरं प्राप्नुयुः । संस्कृतभाषाधिगमः न केवलं संस्कृतभाषायां निबद्धस्य ज्ञानभण्डारस्यास्वादनाय एव क्रियते, अपितु मानवजीवनस्य व्यावहारिकपक्षस्य सर्वोच्चविकासेन सह उत्तमनागरिकनिर्माणार्थं क्रियते । अत एव आधुनिकजीवनस्य अपरिहार्याङ्गभूतस्य मोवाइलसहकृतभाषाधिगमस्य अनुप्रयोगः संस्कृतशिक्षणमुपकुर्यात्। भाषाधिगमस्य विविधपक्षेषु निस्तन्त्रोपकरणानां प्रयोगसन्दर्भे अनेकैः शोधकर्तृभिः शोधकार्यं क्रियते । अधोलिखितविवरणपूर्वकमत्र संस्कृतभाषाधिगमे मोबाइलयन्त्रोपयोगस्य लाभानां प्रदर्शनं क्रियते । तत्र मोबाइलसहकृतभाषाधिगमे संस्कृतभाषायाः अधिगमसन्दर्भे सामान्यक्षेत्राणां शब्दावली-श्रवण-व्याकरण-ध्वनिविज्ञान-पठनावबोधक्षमतानां विवेचनं क्रियते ।

**शब्दावल्याः अधिगमः**

मोबाइलयन्त्रमाध्यमेन शब्दावल्याः अधिगमाधारितगतिविधयः अधिगन्तुः भाषादक्षतायाः स्तराधारेण एकया शोधपरियोजनया अपरा भिन्ना भवति । कक्षाकक्षे पठितांशानाम् आधारेण नूतनशब्दावल्याः अधिगमाय छात्रेभ्यः ईमेलप्रेषणं अथवा सन्देशप्रेषणं सामान्यरीतिः वर्तते । केनेडी-लेवीमहोदयौ एकस्मिन्नध्ययने शिक्षार्थिभ्यः तेषां मोबाइलयन्त्रेषु सन्देशमाध्यमेन नूतनसन्दर्भेभ्यः

ज्ञातशब्दानाम् प्रतिसप्ताहं नव दश वा अवबोधकसन्देशानां सन्देशप्राप्तेः अवसरान् अयच्छन् । अस्य परिणामानुसारं एते सन्देशाः शब्दावल्याः अधिगमे अत्यधिकसहायकाः आसन् । मोबाइलयन्त्रमाध्यमेन शब्दावली-अधिगमस्य अन्यरणनीतयः अपि भवन्ति । संस्कृतशिक्षणेऽपि शिक्षार्थिभ्यः कक्षाकक्षे क्रियमाणानां गतिविधीनाम् आधारेण किञ्चित् अनुरूपितशब्दावल्या अभ्यासाः प्रदातव्याः, तदनु छात्राः तान् अभ्यासान् स्वीयमोबाइलयन्त्रेषु पूरयित्वा अध्यापकेभ्यः प्रेषयन्ति । नूतनशब्दानाम् उत्तमावबोधनाय संस्कृतभाषायाः अधिगन्तुः मोबाइलयन्त्रे चित्रात्मकभाष्यप्रदर्शनेनापि शब्दावल्याः अधिगमः भवितुमर्हति ।

**उच्चारणम्**

द्वितीययुगस्य मोबाइलयन्त्रस्य प्रयोक्तृभ्यः श्रवण-भाषणाभ्यां सह बहुमाध्यमसौविध्यानाम् उपयोगसामर्थ्यं प्रयच्छन्ति । एकः उत्तमः एम-अधिगममाध्यमः ध्वनेः सञ्चाराय भाषणसौविध्यं भवेत् । एतादृशसौविध्यानामनन्तरम् अधिगन्तारः ध्वनिकार्येण सह निःशुल्कसार्वजनिकमञ्चेभ्यः शब्दकोशान् डाउनलोड कर्तुमर्हन्ति, येन ते स्वीयावश्यकतानां पूर्तौ सामर्थ्यप्राप्तये अपरिचितानां नूतनानाञ्च शब्दानां समुचितम् उच्चारणम् अधिगच्छेयुः । बहुमाध्यमसौविध्ययुक्तानि मोबाइलयन्त्राणि शिक्षार्थिभ्यः स्वीयध्वन्यभिलेखनस्य अवसरं यच्छन्ति । येन शिक्षकः छात्राणाम् उच्चारणस्य न्यूनतानां मूल्याङ्कनं सक्षमो भवति ।

**पठनावबोधः**

पठनाभ्यासः शिक्षार्थिभ्यः स्वीयशब्दावल्याः शब्दावलीज्ञानस्य च प्रवर्द्धने उपकुर्वन्ति, यच्च छात्राणां पठनावबोधस्य विकासे साहायकं भवति । पठनगतिविधयः शिक्षार्थिभ्यः मोबाइलयन्त्रेषु अनुरूपितानाम् उत्तमप्रकल्पिताधिगमपाठ्यक्रमाणां प्रेषितसन्देशानां वा माध्यमेन प्रदातुं शक्यन्ते । पठनगतिविधेः समापनसन्दर्भे शिक्षार्थिभ्यः तेषां पठनावबोधकौशलस्य मूल्याङ्कनाय एका पठनलेखव्यवस्था प्रदीयते । मोबाइल-अधिगमकार्यक्रमः यस्मिन् पाठस्य उद्घोषकः उच्चारणेन सह पठनकार्यम् एकस्मिन्नेव समये पठनावबोधनयोः उभयोरपि अवगमनस्य वृद्धये करोति, तद् अधिकः सहायकः भवति ।

**निष्कर्षः**

मोबाइलप्रविधेः उदीयमाना गतिः जीवनस्य सर्वेषां पक्षानां वृद्धिं करोति, येन प्रविधिरयं ज्ञानस्य विभिन्नाऽयामानाम् अधिगमे महत्त्वपूर्णभूमिकायाः निर्वहणं कुर्यात् । अधुना शिक्षककेन्दितशिक्षायाः छात्रकेन्द्रितशिक्षां प्रति स्पष्टपरिवर्तनेन एम्-अधिगमेन छात्रैः प्रविधेः उपयोगः पूर्वापेक्षया इतोऽपि प्रभावि रुचिपूर्णञ्च अनुभूयते । वस्तुतः मोबाइलयन्त्रमाध्यमेन वयं भाषाधिगन्तृभ्यः अधिगमस्य समृद्धं वातावरणं

प्रदातुं शक्नुमः । यद्यपि मोबाइलसहकृतभाषाधिगमप्रविधिमाध्यमेन भाषाशिक्षणसन्दर्भे बहूनि शोधकार्याणि जातानि, किन्तु तथापि एतानि अपर्याप्तान्येव सन्ति । भारतवर्षे अस्मिन् क्षेत्रे अत्यधिककार्यस्यावश्यकता अस्ति । तत्रापि विशेषतया संस्कृतभाषाधिगमे मोबाइलप्रविधेः अनुप्रयोगः अत्यधिकम् उपकुर्यात् । एतदर्थं शिक्षणाधिगमप्रक्रियायाः वातावरणम् इतोऽपि प्रभावपूर्णतां प्रदाय मोबाइलयन्त्रप्रविधेः साहाय्येन क्षेत्रेऽस्मिन् उत्तमं कार्यं भवितुमर्हति । संस्कृतभाषायाः केषुचित् भाषाकौशलेषु यथा – श्रवणभाषणकौशलयोः सन्दर्भे मोबाइलसहकृतगतिविधीनां कठोरतन्त्रोपागमसम्बन्धिन्यूनतानां कारणेन परिष्कारस्य इतोऽपि आवश्यकता अस्ति । एम-अधिगमस्य समक्षे बह्व्यः उपहुतयः सन्ति, किन्तु भाषाधिगमाय श्रेष्ठतरं वातावरणं प्रदातुं स्वीयविविधसमस्याभिस्सह अयं नित्यं तीव्रगत्या वर्धमानोऽस्ति ।

यद्यपि सङ्गणकस्य तुलनायां मोबाइलयन्त्रमाध्यमेन भाषाधिगमगतिविधीनां सम्पादने अधिकः समयः गच्छेत्। तथापि शिक्षार्थिभ्यः अस्मिन् समयस्थानयोः स्वतन्त्रतायाः अधिकानुभूतिः भवति, येन ते अवकाशकालस्य सदुपयोगेन द्वितीयां भाषामधिगच्छेयुः । इत्थं मोबाइलसहकृतभाषाधिगमः (MALL) समयस्थानयोर्दृष्ट्या भाषाधिगमस्य बाधानाम् एकम् आदर्शसमाधानमिति वक्तुं शक्यते । यामागुचीमहोदयानुसारं "एकः सङ्गणकः मोबाइलयन्त्रात् श्रेष्ठतरं भवति, यस्मिन् विभिन्नप्रकारस्य सूचनानां यथा दृश्य-ध्वनि-पाठसम्बन्धिसूचनानां सञ्चालनम् उत्तमतया भवति, परन्तु पोर्टेबिलिटीदृष्ट्या सङ्गणकापेक्षया मोबाइलयन्त्रं श्रेष्ठतरं भवति" । अपि च सङ्गणकयन्त्रं सर्वेषां कृते सुलभं न भवति, मोबाइलयन्त्रं तु व्यवसाध्यं सर्वसुलभं च भवति । इत्थम् उपर्युक्तविवेचनेन स्पष्टं भवति यत् संस्कृतभाषाया अधिगमे मोबाइलसहकृतभाषाधिगमप्रविधिः (MALL) महदुपकुर्यादिति ।

**********

## सन्दर्भाः


1. Sharples. M. (2000). The Design of personal mobile technologies for lifelong learning". Computers & Education, 34(3-4), pp. 177-193
2. "Second Language Teaching and Learning in the Next Generation'', Gay, G.; M. Stefanone, M. Grace-Martin,
3. Huang, C. and P. Sun. (2010) "Using mobile technologies to support mobile multimedia English listening exercise in daily life". CNET 2010.
4. Klofer, E; K. Squire, and H. Jenkins. (2002) " Environmental Detectives, IEEE Computer Society, pp.95-98
5. Kukulska-Hulme, A. (2009). "Will mobile Learnng change language learning, ReCALL 21(2), pp. 157-165
6. तत्रैव।
7. Microsoft Research Program. (2010). At:Htttp//research.microsoft.com/enus/collobrotion/papers/Berkeley.pdf
8. Chen, C. M. & S. H. Hsu. (2008) "Personalized Intelligent mobile learning system for Supporting Effective English Learning.' Educational Technology & Society, 11 (3), pp. 153-180.

# भाषायाः उद्गमे विविधसिद्धान्ताः

✍ डॉ. बिचित्ररञ्जनपण्डा*

मानवः स्वकीयभावान् प्रकटयितुं यच्च मौखिकसाधनम् आश्रयति सा भाषा। यद्यपि संकेत-इङ्गितचेष्टादिभिः केचन भावाः अभिव्यञ्जयितुं समर्थाः भवन्ति तथापि स्वकीय भावान् सूक्ष्मातिसूक्ष्मरूपेण स्पष्टतया च व्यक्तीकर्तुं प्रमुखसाधनं हि भाषा। मननस्य चिन्तनस्य विचारस्य च साधनं हि भाषा। भाषा तादृशी जीवनज्योतिर्भवति या इतरैः सह सम्बन्धं स्थापयितुं समर्था भवति। मानवीयविचाराः समाजे सम्पर्कं स्थापयन्ति। अयं सम्पर्कः भाषया सम्भवति। यदि मनुष्यस्य पार्श्वे भाषारूपममोघास्त्रं न भवति तर्हि मनुष्योऽपि पशुपक्षीकीटपतङ्गादितुल्य: स्वकीयभावान् स्पष्टतया व्यक्तीकर्तुम् असमर्थो भवति। विश्वस्मिन् विश्वे प्रत्येकस्मिन् देशे काचित् एका भाषा प्रचलति, सा तेषां विचारविनिमयस्य माध्यमो भवति। वस्तुतः इयं भाषा मानवशरीरे दैवी अंशरूपेण विद्यमाना वर्तते, सा पुनः सृष्टौ मनुष्याः केवलं प्राप्ताः वर्तन्ते। उक्तं यथा -

**वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती।**
**न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी।।**

भाषायाः स्वरूपमेतादृशं चेत् तर्हि तस्या उत्पत्तिः कथमिति अवश्यं ज्ञातव्यं भवति। वस्तुतः भाषोत्पत्तिजन्यविषयाः द्वन्दास्पदा:। यतो हि विषयेऽस्मिन् विदुषां वैमत्यं लक्ष्यते। अस्मिन् विषये केचन विचारा अपूर्णा अनिर्णयात्मिकाश्च सन्ति, केचन विचाराः पूर्णतया त्रुटिपूर्णा:, केचन अंशतः। भाषायाः उत्पत्तिविषये द्वे वार्ते अनिवार्ये स्तः।

(1) वाग्यन्त्रेण ध्वनिम् अथवा वर्णोच्चारणस्य ममता।

(2) उच्चारितध्वनेः अर्थेन साकं सम्बन्धः।

अत्र प्रथमा या वार्ता विद्यते सा तु सर्वेषु पशुपक्षिषु तथा च अन्येषु जीवेषु प्राप्यते। तेषां समीपे ध्वनितन्त्रम् अर्थात् मुखं विद्यते। तेन मुखेन ते स्वाभिप्रायम् अस्पष्टतया प्रकटयन्ति। तेषां समीपे व्यक्तवाचः अभावो विद्यते। ते काँव-काँव, चीं-चीं, म्याँऊ-म्याँऊ इत्यादयः अस्पष्टध्वनयः उच्चारयन्ति। परन्तु मनुष्येषु इयं क्षमता अर्थात् स्पष्टोच्चारणस्य क्षमता जन्मतः प्राप्यते। अतः ते स्पष्टवाचा स्वाभिप्रायं प्रकटयन्ति। विचारणीयो विषयो विद्यते यत्- मनुष्य: सर्वप्रथमं शब्देन साकम् अर्थस्य सम्बन्धः कथं स्थापितवानिति?

* *संविदाध्यापकः, शिक्षाशास्त्रविभागः, राष्ट्रियसंस्कृतसंस्थानम्, (मा.वि) लखनऊ परिसरः।*

भाषोत्पत्तिविषयकाणाम् अनेकेषां सिद्धान्तानां प्रचलनानन्तरमपि भाषायाः उत्पत्तेः सम्बद्धं निश्चितं निर्णयात्मकम् उत्तरं न प्राप्तम्, एतदर्थम् अयं विषयः भाषा-वैज्ञानिकैः भाषाविज्ञानक्षेत्रात् बहिर्निष्काषितः। षड्षष्ट्युत्तर-अष्टादशशततमे (1866) वर्षे पेरिसदेशे भाषाविज्ञानस्य Law Society the Linguistique नाम्ना एकस्याः समितेः स्थापना अभवत्। समितेः अधिनियमे निर्देश आसीत् यत् 'भाषायाः उत्पत्तिः तथा विश्वभाषायाः निर्माणम्' इति उभयोरपि विषययो: उपरि चर्चा नैव भविष्यति। अस्य बहिष्करणस्य मूलकारणं एतदेवासीत् यत्- भाषोत्पत्तिविषयकसिद्धान्तः अनुमानाश्रितः परन्तु विज्ञानं तथ्याश्रितमेव। भाषायाः मूलरूपम् अप्राप्यं भवति। अतः भाषाविज्ञानम् अस्मिन् क्षेत्रे असामर्थ्यं प्रकट्य अयं विषयः दर्शनस्य, मानवविज्ञानस्य, समाजविज्ञानस्य च विषय इति निरदिशत्। वस्तुतः प्रसङ्गेऽस्मिन् भाषायाः उत्पत्तिविषये विविधवादा: सिद्धान्ताश्च लक्ष्यन्ते। यथा- (1) दिव्योत्पत्तिसिद्धान्तः (2) संकेतसिद्धान्तः (3) ध्वन्यनुकरणसिद्धान्तः (4) आवेगसिद्धान्तः (5) रणनसिद्धान्तः (6) श्रमध्वनिसिद्धान्तः (7) इंगितसिद्धान्तः (8) संपर्कसिद्धान्तः (9) संगीतसिद्धान्तः (10) प्रतीकसिद्धान्तः (11) समन्वयसिद्धान्तः (12) प्रतिभासिद्धान्तः इत्यादयः सिद्धान्ताः सन्ति।

स्थालिपुलकन्यायेन कतिपयसिद्धान्तानां विवरणमत्र प्रस्तूयते-

**दिव्योत्पत्तिसिद्धान्तः (**Divine Theory) -

मतमिदम् अतीवप्राचीनम्। अस्य मतस्य कथनं विद्यते यत्- यथा परमात्मना सृष्टि: कृता, तथैव मानवानां कृते काचित् एका परिष्कृता भाषा निर्मिता प्रदत्ता च। अस्मिन् मते प्रत्येकस्मिन् कार्ये दैवी शक्तेः सत्ता विद्यते। सा च शक्तिः सृष्टेः आरम्भे वैदिकज्ञानं दत्तवती, यया मानवाः स्वकार्यकरणे समर्थाः अभवन्। अनेन प्रकारेण वैदिकसंस्कृतभाषा आदिभाषायाः रूपं प्राप्तवती। अपौरुषेयः वेदः। वेदः ईश्वरेण विरचितः। प्रसङ्गेऽस्मिन् वेदोपनिषदादि तथा दर्शनस्मृतिग्रन्थादिषु बहुश: प्रमाणानि उपलभ्यन्ते-

**देवीं वाचमजयन्त देवास्तां विश्वरूपाः पशवो वदन्ति।**

**तस्मात् यज्ञात् सर्वहुत ऋचः सामानिजज्ञिरे।**

**छन्दांसि जज्ञिरे तस्माद् यजुस्तस्मादजायत।।**

**अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम्।**

**दुदोह यज्ञसिद्ध्यर्थम् ऋग्यजुः सामलक्षणम्।।**

**सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक्।**

**वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे।।**

'अइउण्' इत्यादि चतुर्दशमाहेश्वरसूत्राणि भगवत: शिवस्य डम्बरुनादेन उत्पन्नानि इति ज्ञायन्ते। अत्रापि भाषा दिव्योत्पत्तेः सूचको वर्तते।

**नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम्।**

संस्कृतम् आदि भाषा विद्यते। सर्वे सम्प्रदायाः स्व-स्वभाषाम् आदिमभाषा इति कथयन्ति। यथा- जैनेन बौद्धेन च अर्धमागधी पालिभाषां, ईसाई जनाः यहूदी जनाः च हिब्रूभाषां, मुसल्लिमजनाः कुरानस्य भाषा अरबीभाषाम् आदिमभाषा इति कथयन्ति। जर्मन् विद्वान् सुसमिल्श महोदयः दिव्योत्पत्ते: समर्थनं कुर्वन् कथयति- भाषा मानवकृता नास्ति अपितु परमात्मना प्राप्त उपहारं विद्यते इति।

**संकेतसिद्धान्तः** (Agreement Theory)

अस्य सिद्धान्तस्य अपर नाम निर्णयवादः, स्वीकारवादः, निर्णयसिद्धान्तो वा वर्तते। अस्य सिद्धान्तस्य मूलप्रवर्तकः अष्टादशशताब्द्याः प्रसिद्धः फ्रेंच विचारकः रुसोमहोदयः आसीत्। अस्य प्रवर्तकस्य मुख्याभिप्रायो विद्यते यत्- प्रारम्भे मनुष्या: पशुवत् शिरश्चालनादि आंगिकचेष्टया संकेतैर्वा स्वाभिप्रायं प्रकटयन्त: आसन्। परन्तु अनेन माध्यमेन सर्वविधकार्यस्य सिद्धिः नैव संजातः। अतः ग्रामस्य मुख्याः सभायाः आयोजनं कृत्वा प्रति वस्तूनां नाम निर्धारणं कृतवन्त:। एतत् सामाजिकनिर्णयम् अपि वक्तुं शक्यते। अनेन निर्णयेन ध्वन्यात्मकसंकेतस्य उत्पत्तिः अभवत् तथा तस्मात् भाषा प्रादुर्भूता। प्रसङ्गेऽस्मिन् काव्यालंकारे भामह वदति-

**इयन्त ईदृशा वर्णा ईदृगर्थाभिधयिनः।**

**व्यवहाराय लोकस्य प्रागित्थं समयः कृतः।।**

अर्थात् सृष्टेः आरम्भे लोकव्यवहाराय अयं च निर्णयः निर्णितः यत्- इयन्त वर्णाः, ते च क्रमशः स्थापनेन ईदृगर्थप्रतिपादने समर्थाः भविष्यन्ति।

**ध्वन्यनुकरणसिद्धान्तः (Onomatopoic Theory, Bow-Bow Theory, Echoic Theory) -**

अनुकरणसिद्धान्तः, ध्वन्यात्मकानुकरणसिद्धान्तः, अनुकरणमूलकतावादः, शब्दानुकरणवादः, भो-भो वादः इत्यादिभिः नामभिः अयं सिद्धान्तः सुपरिचितः। अस्य सिद्धान्तस्य अभिमतम् एवं वर्तते यत्- प्राकृतिकवस्तु तथा पशुपक्ष्यादित: यथा ध्वनिः निर्गच्छति तदनु तस्य वस्तुविशेषस्य नामकरणं भवति।

यस्मात् पदार्थात् यथा ध्वनिः निस्सरति तदनु तस्य पदार्थस्य नामापि तथैव भवति। इत्थं भाषायाः रचना अभवत्। यथा- काँव-काँव ध्वनितः काकः, कूः-कूः ध्वनितः कोयल (पिकः) झर-झर ध्वनितः निर्झरः, पट्-पट् ध्वनितः पटाखा आदयः। श्रावण-प्रत्यक्षवत् चाक्षुष-प्रत्यक्षाधारेणापि शब्दाः निर्मीयन्ते। यथा- हिन्द्यां चमाचम, जगमग, चकमक इत्यादयः, ध्वन्यनुमूलककतिपयनामानि बाल्ये बालाः आकारयन्ति परन्तु सा च ध्वनिः क्रमशः प्रसिद्धिं प्राप्नोति। यथा- म्याऊँ कथनेन मार्जारस्य बोधः भों-भों कथनेन कुक्कुरस्य बोधो जायते।

न्वारे महोदयानुसारम् एतादृशेभ्य: शब्देभ्यो भाषयाः उत्पत्तिः अभवत् इति।

**आवेगसिद्धान्तः (Interjectional Theory, Pooh-Pooh Theory)**

मनोभावाभिव्यञ्जकतावादः, मनोभावाभिव्यक्तिवादः, मनोरागव्यञ्जकशब्द-मूलकतावादः, पूह-पूह इत्यादय अस्य सिद्धान्तस्य नामान्तराणि वर्तन्ते। अस्य सिद्धान्तस्य अयमेवाशयः वर्तते यत्- आदिकालतः मनुष्य: स्वकीय-हर्ष-शोक-विस्मय-भय-घृणा-क्रोधादिभावान् प्रकटीकर्तुं शब्दस्य ध्वनेः वा उच्चारणं कृतवानासीत् करोति च। क्रमशः सा च ध्वनिः भाषोत्पतेः कारणम् अभवत्। यथा- हर्षावेगवशात् मनुष्यस्य मुखात् अहो, आहा, वाह इत्यादय: ध्वनयः स्वतः निर्गच्छन्ति। तथैव क्रोधात् आः, घृणावशात् छिः, धिक् इत्यादयः निर्गच्छन्ति। आवेगसूचकध्वनिनां प्रयोगेण प्रारम्भे मनुष्यः स्वकीयमनोभावान् प्रकटयति स्म। पुनः क्रमेण भाषणशक्तेः विकासोऽभवत्। सा च शक्ति भाषोत्पत्ते: कारणम् अभवत्।

**रणनसिद्धान्तः (Ding-done Theory) -**

धातुसिद्धान्तः, अनुकरणमूलकतावादः डिंग-डांगवादः इति अस्य सिद्धान्तस्य अपर नामानि वर्तन्ते। अस्य सिद्धान्तस्य मूलप्रवर्तकः प्लेटोमहोदय:। अस्य मतानुसारं शब्दार्थयोः कश्चन रहस्यात्मक-स्वाभाविक-सम्बन्धो विद्यते। कथनस्य अयमभिप्रायो यत् प्रकृतौ कश्चन सामन्यनियमो वर्तते यत् कमपि वस्तुविशेषं यदा वयं नोदयामः तदा तस्मात् काचित् एका विशेषध्वनिर्निर्गच्छति। सा च ध्वनिः तस्य वस्तुविशेषस्य विशेषता एव भवति। यथा लौहः, काष्ठम्, टिन्, कांच इत्यादिषु नोदनेन काचित् एका विशेषध्वनिः निर्गच्छति, सा च ध्वनिः रणननाम्ना परिचीयते। इयं च रणनध्वनिः भाषा उत्पत्तेः कारणमिति अस्य सिद्धान्तस्य अभिमतं वर्तते।

**श्रमध्वनिसिद्धान्तः (Yo-he-ho Theory) -**

श्रमापहारमूलकतावादः आहोसित् यो-हे-हो इति अस्य सिद्धान्तस्य पर्यायपदानि वर्तन्ते। अस्य

सिद्धान्तस्य मूलप्रवर्तकः न्वारे। अस्य अयमेव आशयः वर्तते यत् मनुष्यः यदा शारीरिकपरिश्रमं करोति तदा श्रमवशात् श्वासप्रश्वासे तीव्रता आयाति। परिश्रमे न केवलं मांसपेशादिषु बलं दीयते अपितु स्वरतन्त्रेषु संकोच-विस्तारः अपि परिलक्ष्यते। श्रम-जन्य ध्वनिः श्रमध्वनिः। इयं श्रमध्वनिः भाषोत्पत्तेः कारणं भवति।

**इंगितसिद्धान्तः (Gesture Theory) -**

डार्विन्-महोदयेन षड्भिः असंबद्धभाषाभिः साकं तुलनात्मकमध्ययनं कृत्वा इंगितसिद्धान्तः प्रतिपादतः। भाषायाः विकासे चतुर्विधसोपानानि नितराम् अपेक्षितानि। यथा- (1) भावाभिव्यंजकध्वनयः अर्थात् भय-क्रोध-हर्षादि-अवस्थायां ध्वनिद्वारेण स्वकीयभावस्य प्रकटीकरणम् यथा- भयवशात् अहो, हाय इत्यादयः शब्दाः। (2) अनुकरणात्मकशब्दाः- अर्थात् पशुपक्ष्यादिनां मुखान्निर्गतध्वनेः अनुकरणेन शब्दरचनायाः निर्माणम्। यथा- कांव-कांव ध्वनितः काकः इति। (3) भावसंकेतः अथवा इंगितः- अर्थात् आंगिकसंकेतेन भावप्रकाशनम्। (4) सूक्ष्मभावानां कृते शब्दाः।

अस्य वादस्य अयमेवाशयः यत् मानवः यदा किमपि कार्यं करोति तदा आङ्गिकचेष्टां प्रदर्शयति। यथा -चायपानम्, जलपानम् इत्यादयः । आङ्गिक-चेष्टा इत्यत्र अङ्गश्चालनम्। जलं यदा पिबति तदा तस्मात् 'पा' इति ध्वनिः निर्गच्छति। अतः मानवः प्रारम्भे आङ्गिकचेष्टां करोति। पुनः आङ्गिकचेष्टया या च ध्वनिः निर्गच्छति तदनु तस्य नामकरणं भवति। यथा- आरम्भे शिशुः यदा जलं पिबति तदा तस्मात् 'पा' इति ध्वनिः निर्गच्छति। तामेव ध्वनिम् अनुकृत्य पुनः प्रारम्भे -'पानि' इति स्थाने 'पा' इति उच्चारणं करोति। पुनः भाषायाः विकासानन्तरं जलम्, वारि, अम्बु इत्यादिभिः नामभिः आकार्यते इति इङ्गितसिद्धान्तस्य अभिप्रायः।

**संपर्कसिद्धान्तः (Contact Theory) -**

अस्य सिद्धान्तस्य मूलप्रवर्तकः प्रसिद्धमनोवैज्ञानिकः जी. रेवेजमहोदयः। अस्य मतस्य कथनम् इदं वर्तते यत्- मनुष्यः सामाजिकप्राणी। सः समाजे निवसति। इतरैः सह संपर्कं साधयति च। इयं संपर्कसाधनजन्यप्रवृत्तिः जन्मसिद्धा एव। प्रतिव्यक्तौ इयं प्रवृत्तिः परिलक्ष्यते। अनया प्रवृत्त्या समाजस्य निर्माणं भवति। प्रारम्भे मानवाः बुभूक्षादिन् अभिव्यञ्जयितुम् इंगितस्य तथा मौखिकाभिव्यक्तेः साहाय्यं स्वीकुर्युः। तदानीं या च मौखिकध्वनिः निर्गता सा पुनः क्रमशः भाषारूपं धृतवती। आदौ अयं च संपर्कः भावस्तरेषु (Enotional Contact) स्थित्वा पुनः विकसितः सन् विचारस्तरं प्राप्तवान् स्यात् इति संपर्कसिद्धान्तस्य अभिप्रायः। यथा- संपर्कत्वेन माता इति शब्दं स्वीकृत्य शिशुः स्वीयमातरं हे माते! हे माते!

इति आकारयति। अत्र प्रारम्भिकशब्दस्य (माता) सम्बन्धः क्रियापदेन सह सम्बन्धितो भवति। अर्थात् माते इति पदात् हे माते! माम् दुग्धं पाययतु, जलं वा पाययतु इति अर्थः। अयं संपर्कसिद्धान्तः प्रारम्भे संपर्के स्थित्वा पुनः विकसितः सन् विचारस्तरं संप्राप्य परिष्कृतो भूत्वा भाषायाः रूपं स्वीकृतवती इति संपर्कवादिणाम् आशयः।

**प्रतीकसिद्धान्तः (Symbolic Theory) -**

अस्य सिद्धान्तस्य मतानुसारं संयोगवशात् अथवा इतर अन्य सामान्य-सम्बन्धवशात् कस्यापि शब्दस्य केनापि अर्थेन साकं सम्बन्धो भवति। सः च शब्दः तस्यैव अर्थस्य प्रतीकः भवति। भाषाविज्ञानिनः एतादृशशब्दान् नर्सरी (Nursery Word ) शब्दाः इति कथयन्ति। यथा-सम्बन्धशब्दाः माता, पिता, भ्राता, भगिनी आदयः। अत्र अधिकांशतः प्रारम्भिकध्वनयः ओष्ठ्यवर्णाः भवन्ति। अतः सर्वविधभाषासु सम्बन्धवाचकाः शब्दाः पवर्गयुक्ताः भवन्ति। यथा हिन्द्याम्- पिता, मामा, भाई, माता, मामी। आंग्लभाषायाम् -Mother, Father, Brother आदि। जर्मनभाषायाम्- Mutter (माता), Bruden (भ्राता), फ्रेंच भाषायाम् Mere (माता) Pere (पिता), लैटिन भाषायां Maten (माता) आदयः। अतः प्रतीक एव भाषोत्पत्तेः कारणमिति एतेषाम् अभिप्रायः।

**********

**सन्दर्भग्रन्थसूची-**

1. आधुनिक भाषा-विज्ञान-डॉ. विवेक शंकर, राजस्थान हिन्दी ग्रन्थ अकादमी, जयपुर

2. संस्कृत का भाषाशास्त्रीय अध्ययन-डॉ भोलाशंकर व्यास, विश्वविद्यालय प्रकाशन, वाराणसी

3. भाषा -विज्ञान- डॉ. कर्णसिंह, साहित्य भण्डार, सुभाष बाजार, मेरठ, 250002

4. भाषा-विज्ञान एवं भाषाशास्त्र, डॉ कपिलदेव द्विवेदी विश्वविद्यालय प्रकाशन, वाराणसी

5. संस्कृतशिक्षणम्-नवीनप्रविधयश्च-डॉ. च.ल.ना.शर्मा, डॉ फतेहसिंहः, आदित्यप्रकाशनम्, जयपुरम्

6. भाषाविज्ञान- डॉ चक्रधर कर्णाटक, चौखम्बा सुरभारती प्रकाशन, वाराणसी

# भर्तृहरिकृते वाक्यपदीये भाषावैज्ञानिकतत्त्वानि

✍ **डॉ. मनीषजुगरानः***

**शोधसारः** ( Abstract)

*आचार्यभर्तृहरिविरचितं वाक्यपदीयं व्याकरणग्रन्थेष्वन्यतमं स्थानं भजते । वाक्यञ्च पदञ्च वाक्यपदे ते अधिकृत्य कृतो ग्रन्थो वाक्यपदीयमिति । इदञ्च वाक्यपदीयं ब्रह्म-पद-वाक्याख्येषु त्रिषु काण्डेषु विभक्तं वर्तते । यत्र संस्कृतव्याकरणसम्बन्धीनि भाषासम्बन्धीनि च नैकविधानि तत्त्वानि वर्णितानि वर्तन्ते । व्याकरणशास्त्रस्य स्वतन्त्रदर्शनप्रतिपादित्वाद् वाक्यपदीयं तद्दार्शनिकग्रन्थोऽपि मन्यते ।वाक्यपदीये भाषाविज्ञानसम्बन्धीनि कानि-कानि तत्त्वानि विवेचितानीत्युद्देश्यं मनसि निधाय प्रकृतेऽस्मिन् शोधपत्रे वाक्यपदीये निरूपितानि भाषावैज्ञानिकतत्त्वान्येव विवेचितानि । तत्रापि विशिष्य शोधपत्रेऽस्मिन् वाक्यपदीये निरूपितः भाषोत्पत्तिसिद्धान्तः, ध्वनिविज्ञानं, पदविज्ञानं, वाक्यविज्ञानम् अर्थविज्ञानञ्चेत्यादीनां विवेचनं विश्लेषणञ्च कृतं वर्तते । तेषां विवेचनान्निष्कर्षोऽयमवाप्तो यद् वाक्यपदीये आचार्येण भर्तृहरिणा भाषाविज्ञानसम्बन्धीनि नैकानि तत्त्वानि विवेचितानि वर्तन्ते यानि च अद्यापि भाषाशास्त्रिणः अत्यन्तमुपकुर्वन्ति ।*

***सङ्केतशब्दाः** ( keywords )- वाक्यपदीयम्, भाषाविज्ञानम्, भाषोत्पत्तिसिद्धान्तः, ध्वनिविज्ञानम्, पदविज्ञानम्, वाक्यविज्ञानम्, अर्थविज्ञानम् ।*

**भूमिका (**Introduction **)**

भाषा समाजस्य विचारविनिमयस्य भावाभिव्यक्तेश्च मुख्यं साधनं वर्तते। व्यक्तवाग्रूपेण यस्या अभिव्यक्तिः क्रियते सा भाषेत्युच्यते । भाषया हि मानवाः स्वीयान् विचारान् भावांश्च अभिव्यक्तीकर्त्तुं सक्षमा भवन्ति। विनैनां कश्चनापि स्वाभिप्रायं सर्वथा बोधयितुन्नार्हति। निखिलेऽस्मिन् जगति यत्किमपि कर्म प्रवर्तते तत्सर्वं भाषाश्रितमेवेति। भाषाया महत्त्वं प्रतिपादयिता काव्यादर्शकारेण आचार्येण दण्डिना प्रोक्तं यत् समग्रमपि लोकत्रयं भाषाज्योतिरेव प्रकाशयति, भाषाज्योतिर्विना सम्पूर्णमपि भुवनत्रयमन्धकारमयं स्यात् –

**इदमन्धन्तमः कृत्स्नं जायेत भुवनत्रयम् ।**
**यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते ।।**[1]

उक्तञ्च भर्तृहरिणा –

**वाग्रूपता चेन्निष्क्रामेदवबोधस्य शाश्वती ।**
**न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी** ।।[2]

अर्थाद् यथा अग्नेः प्रकाशकत्वं स्वरूपं वर्तते तथैव ज्ञानस्यापि शाश्वती वाग्रूपता वर्तते । यदीयं निष्क्रामेत्

[1]काव्यादर्शः- 1.4
[2]वाक्यपदीयम् -1.124

** संविदाध्यापकः, शिक्षाशास्त्रविभागः, राष्ट्रियसंस्कृतसंस्थानम्, (मा.वि) भोपालपरिसरः।*

तर्हि उत्पन्नोऽपि प्रकाशो न प्रकाशेदिति यतः सेयं वाग्रूपता प्रत्यवमर्शिनी वर्तते । अपि च लोकेऽस्मिन् तादृशं किञ्चन ज्ञानं नहि वर्तते यच्च शब्दानुगमाद् ऋते विद्यते । अतः सर्वमपि ज्ञानं शब्देनैव (भाषयैव) संसृष्टमिव भासते ।

**न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।**
**अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते । ।**[3]

इत्थं ज्ञानगङ्गाप्रवाहिका भाषा सर्वस्मिन्नपि क्षेत्रे मानवं सततमुपकरोति ।

**भाषाविज्ञानम्** –

व्यवस्थितं तर्कयुक्तञ्च विशिष्टं ज्ञानमेव विज्ञानमिति । एवं भाषाया वैज्ञानिकमध्ययनं यत् शास्त्रं करोति तद् भाषाविज्ञानमिति । किं नाम भाषा ?भाषायाः उत्पत्तिः कथमभूत् ? भाषा कथं विकसिता भवति ? कथञ्च भाषा प्रयुज्यते ? भाषायाः सूक्ष्मतमावयवाः के ? तदुच्चारणविधयः के ? लोकेऽस्मिन् प्रयुज्यमानभाषासु मिथः कीदृशः सम्बन्धो वर्तते ?इत्यादीनांभाषासम्बद्धानां विविधप्रश्नानां जिज्ञासानाञ्च भाषाविज्ञानं वैज्ञानिकरीत्या समाधानं प्रस्तौति । इत्थं भाषाविज्ञानं तादृशं शास्त्रं वर्तते यद् भाषायाः सर्वाङ्गीणं विवेचनात्मकं वैज्ञानिकञ्चाध्ययनं करोति । डॉ.पी.डी.गुनेमहोदयेन भाषाविज्ञानमित्थं परिभाषितम् - **Comparative Philology or simply philology is the Science of Language. Philology strictly means the study of a language from the literary point of view**. (An Introduction to Comparative Philology, p.1)

डॉ.मङ्गलदेवशास्त्रिमहोदयानुसारम् - भाषाविज्ञानं तद्विज्ञानं वर्तते यद्द्वारा सामान्यतो मानवीयभाषाणां, कस्याश्चिद् विशिष्टभाषायाः संरचनायाः तदैतिह्यस्य , विविधभाषाणां, प्रादेशिकभाषाणामुपभाषाणाञ्च पारस्परिकसमानतानां विशेषतानाञ्च तुलनात्मकमध्ययनं क्रियते । (तुलनात्मक भाषाशास्त्र, पृ-3)

**शोधोद्देश्यानि – (**Objectives**)**

प्रकृतमिदमध्ययनं भर्तृहरिकृते वाक्यपदीये भाषावैज्ञानिकतत्त्वानां परिशीलनात्मकं वर्तते । अध्ययनमिद-मधोलिखितोद्देश्यान्याश्रित्य विहितम् –

- भर्तृहरिकृते वाक्यपदीये वर्णितानां भाषावैज्ञानिकतत्वानां परिशीलनम् ।
- भर्तृहरिकृते वाक्यपदीये निरूपितस्य भाषोत्पत्तिसिद्धान्तस्य विमर्शनम् ।
- भर्तृहरिकृते वाक्यपदीये वर्णितस्य ध्वनिविज्ञानस्य समीक्षणम् ।
- भर्तृहरिकृते वाक्यपदीये विवेचितस्य पदविज्ञानस्य समीक्षणम् ।
- भर्तृहरिकृते वाक्यपदीये वर्णितस्यवाक्यविज्ञानस्य समीक्षणम् ।
- भर्तृहरिकृते वाक्यपदीये वर्णितस्य अर्थविज्ञानस्य समीक्षणम् ।

[3]वाक्यपदीयम् -1.123

**शोधविधिः- (Research Methodology )**

प्रकृतेऽस्मिन्नध्ययने वर्णनात्मकानुसन्धानान्तर्गतः वस्तुविश्लेषणप्रविधिः प्रयुक्तः।

**वाक्यपदीये भाषावैज्ञानिकतत्त्वानि**

आचार्यभर्तृहरिविरचितं वाक्यपदीयं व्याकरणग्रन्थेष्वन्यतमं स्थानं भजते । वाक्यञ्च पदञ्च वाक्यपदे ते अधिकृत्य कृतो ग्रन्थो वाक्यपदीयमिति। इदञ्च वाक्यपदीयं ब्रह्म-पद-वाक्याख्येषु त्रिषु काण्डेषु विभक्तं वर्तते । व्याकरणशास्त्रस्य स्वतन्त्रदर्शनप्रतिपादित्वाद् वाक्यपदीयं तद्दार्शनिकग्रन्थोऽपि मन्यते । वाक्यपदीये भाषाविज्ञानसम्बन्धीनि नैकानि तत्त्वानि विवेचितानि वर्तन्ते यान्यद्यापि भाषाविज्ञानिनःभाषाध्ययने तद्विश्लेषणे च अत्यन्तमुपकुर्वन्ति।

भाषायाः लघुतम एककः ध्वनिर्भवति, अस्यैव ध्वनेः भाषाप्रयोगे प्रप्रथममुच्चारणं भवति। नैकैर्ध्वनिभिः पदम् (शब्दः) निर्मीयते । पदैश्च वाक्यरचना भवति, वाक्याच्च अर्थस्याभिव्यक्तिर्भवति । अयमेव क्रमः भाषाप्रयोगे नैरन्तर्येण प्रवर्तते। एषु प्रत्येकं तत्त्वस्य विशिष्टाध्ययनाद् भाषाविज्ञानस्य चत्वारि प्रमुखाणि अङ्गानि विकसितानि । तद्यथा- ध्वनिविज्ञानम् ( Phonology) , पदविज्ञानम् ( Morphology), वाक्यविज्ञानम् ( Syntax )अर्थविज्ञानञ्च (Semantics )।

प्रकृतेऽस्मिन्शोधपत्रे भर्तृहरिकृते वाक्यपदीये वर्णितानि भाषाविज्ञानसम्बन्धीनि तत्त्वानि विश्लेष्यन्ते,तत्रापि विशिष्य वाक्यपदीयानुसारं भाषोत्पत्तिसिद्धान्तः, ध्वनिविज्ञानं, पदविज्ञानं, वाक्यविज्ञानम् अर्थविज्ञानञ्चेत्यादीनां विश्लेषणं प्रस्तूयते।

**वाक्यपदीयानुसारं भाषोत्पत्तिसिद्धान्तः**

भाषाया उत्पत्तिः कथं जातेत्यस्मिन् विषये भाषाविज्ञानिषु न वर्तते मतैक्यम्। कैश्चिद् मन्यते यद् यदा परमात्मना सृष्टिरचना कृता तत्साकमेव भाषाऽपि आविष्कृता, एषाञ्चायं सिद्धान्तः भाषायाः दिव्योत्पत्तिसिद्धान्तत्वेन प्रसिद्धः । एषु वैदिकैः संस्कृतं, बौद्धैः पालिभाषा, जैनैः प्राकृतं , क्रैस्तैः हिब्रू, यवनैश्च अरबी इत्यादयः भाषाः आदिभाषात्वेनाङ्गीकृताः । कालक्रमेण भाषोत्पत्तिविषये नैकैः भाषाशास्त्रिभिः यथामति भाषाया विभिन्नाः सिद्धान्ताः प्रतिपादिताः । यथा- सङ्केतसिद्धान्तः, रणनसिद्धान्तः, ध्वन्यनुकरणसिद्धान्तः, आवेगसिद्धान्तः, श्रमध्वनिसिद्धान्तः, सम्पर्कसिद्धान्तः,प्रतीकसिद्धान्तः समन्वयसिद्धान्तश्चेत्यादयः।

वाक्यपदीये भाषायाः प्रतिभासिद्धान्तः स्वीकृतो वर्तते , तदनुसारं भाषायामेव विश्वस्य निबन्धनी शक्तिर्वर्तते, भाषा विश्वस्य नेत्ररूपा प्रतिभा च आत्मरूपा वर्तते।

**शब्देष्वेवाश्रिता शक्तिर्विश्वस्यास्य निबन्धनी।**
**यन्नेत्रः प्रतिभात्मायं भेदरूपः प्रतीयते**॥[4]

[4]वाक्यपदीयम् – 1.118

वाक्यपदीयानुसारं प्रत्येकस्मिन् प्राणिनि प्रतिभा वर्तत एव। प्रतिभा मनुष्येषु जन्मतो भवति अपि च प्रतिभां विना मनुष्यस्य सत्तैव भवितुन्नार्हति। वस्तु किम् ? ध्वनिः कः? कस्य वस्तुनः को गुणः? कस्य ध्वनेः कीदृशः प्रभावो भवति ? इत्यादीनां निर्णयः प्रतिभाद्वारैव भवति। वाक्यपदीयानुसारं केवलं मानव एव न अपितु पशवोऽपि प्रतिभामेवाधारीकृत्य स्वीयानि कर्माणि सम्पादयन्ति। यथोक्तं भर्तृहरिणा-

**प्रमाणत्वेन तां लोकः सर्वः समनुपश्यति।**
**समारम्भाः प्रतीयन्ते तिरश्चामपि तद्वशाद्** ।।[5]

वाक्यपदीयानुसारं प्रतिभा प्रत्येकं प्राणिनि पृथक्-पृथग्रूपेण भूत्वा आवश्यकतानुसारं विभिन्नपरिस्थितिषु परिस्फुटिता भवति । प्रतिभैव समग्रमपि मानवजीवनं सञ्चालयति आवश्यकतानुसारञ्च कार्यं कर्तुं प्रेरयति । वसन्तकाले कोकिलस्य कूजनम्, पक्षिभिर्नीडनिर्माणम्, ऊर्णनाभस्य जावनिर्माणम्, वानरस्य कूर्दनादीनि कार्याण्यपि तत्तत्प्राणिषु विद्यमानविशिष्टप्रतिभाकारणादेव भवन्ति।

**यथा द्रव्यविशेषाणां परिपाकैरयन्त्रजाः। मदादिशक्तयो दृष्टाः प्रतिभास्तद्वतां तथा ।।**
**स्वरवृत्तिं विकुरुते मधौ पुंस्कोकिलस्य कः। जन्त्वादयः कुलयाधिकरणे केन शिक्षिताः ।।**
**आहारप्रीत्यभिद्वेष-प्लवनादिषु क्रियासु कः। जात्यन्वयप्रसिद्धासु प्रयोक्ता मृगपक्षिक्षाम् ।।**[6]

इयञ्च प्रतिभासंस्कारजन्या भवति । मानवस्य संस्काराः (भावनाः) प्रतिभोत्पत्तौ आधारत्वेन वर्तन्ते। इमे च संस्काराः इह जन्मनः पूर्वजन्मनोऽपि भवितुमर्हन्ति। यथोक्तं भर्तृहरिणा –

**भावनानुगतादेतदागमादेव जायते।**
**आसत्तिविप्रकर्षाभ्यामागमस्तु विशिष्यते ।।**[7]

वाक्यपदीये प्रतिभायाः षड् भेदाः प्रतिपादिता वर्तन्ते। तद्यथा- स्वाभाविकी प्रतिभा (जन्मसिद्धा), चरणजन्या (तपसा साधनया च), अभ्यासजन्या, योगजन्या(यौगिकक्रियाजन्या), अदृष्टजन्या ( पूर्वसंस्कारजन्या), विशिष्टोपहिता ( विशिष्टव्यक्तीनां परिस्थितीनाञ्च सम्पर्कात् ) चेति।

**स्वभावचरणाभ्यासयोगादृष्टोपपादिताम्।**
**विशिष्टोपहितां चेति प्रतिभां षड्विधां विदुः ।।**[8]

पुनरियं प्रतिभा द्विविधा भवति – भावयित्री कारयित्री च । भावयित्रीप्रतिभायाः कार्यं ज्ञानार्जनं चिन्तनं मननञ्च वर्तते। कारयित्रीप्रतिभायाश्च कार्यं भावानां क्रियात्मकरूपप्रदानं वर्तते। तस्माद् भावयित्री प्रतिभा ज्ञानस्य भावपक्षः कारयित्री च कलापक्षो वर्तते। भाषोत्पत्त्यर्थम् इमौ द्वावपि पक्षौ अत्यन्तमनिवार्यौ वर्तेते।

**वाक्यपदीयानुसारं ध्वनिः**

ध्वनिविज्ञानं भाषाशास्त्रस्य महत्त्वपूर्णमङ्गं वर्तते । आङ्ग्लभाषायामेतत्कृते Phonology तथा

---

[5]वाक्यपदीयम् 2.147 [6]तत्रैव 2.148-150 [7]तत्रैव 2.151 [8]तत्रैव 2.152

Phonetics इति शब्दद्वयं प्रचलितं वर्तते। ध्वनिविज्ञानं भाषायाःविभिन्नध्वनीनां सम्यग् ज्ञानं कारयति तदुच्चारणञ्च शिक्षयति। एतद्द्वारा ध्वनीनामुच्चारणसम्बन्धिज्ञानं पूर्णं भवति। भाषाप्रयोगे उच्चारणस्य वर्तते अत्यन्तं महत्त्वम्। अत उक्तं महाभाष्ये – एकः शब्दः सम्यग् ज्ञातः सुप्रयुक्तः स्वर्गे लोके च कामधुग् भवति।[9] ध्वनिशिक्षाप्रसङ्गे भगवता पाणिनिना ध्वन्युत्पत्तिविषये स्वीयं मतं प्रस्तुतं यत्-

**आत्मा बुद्ध्या समेत्यर्थान् मनो युङ्क्ते विवक्षया।**
**मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्॥**
**मारुतस्तूरसि चरन् मन्द्रं जनयति स्वरम्।**
**सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः।**
**वर्णान् जनयते तेषां विभागः पञ्चधा स्मृतः** ॥[10]

भर्तृहरिणा ध्वन्युत्पत्तेरयमेव भावः प्रकारान्तरेण उपस्थापितः –

**अथायमान्तरो ज्ञाता सूक्ष्मे वागात्मनि स्थितः।**
**व्यक्तये स्वस्य रूपस्य शब्दत्वेन विवर्तते॥**
**स मनोभावमापद्य तेजसा पाकमागतः।**
**वायुमाविशति प्राणमथासौ समुदीर्यते॥**
**विभजन् स्वात्मनो ग्रन्थीन् श्रुतिरूपैः पृथग्विधैः।**
**प्राणो वर्णानभिव्यज्य वर्णेष्वेवोपलीयते॥**[11]

अर्थात् जीवात्मा सूक्ष्मवाग्रूपेण विद्यमानो भवति। स एव स्वीयस्वरूपाभिव्यक्तये शब्दरूपे परिवर्तितो भवति।सः शब्दः विचारत्वेन परिणितः शारीरिकतेजसा युक्तः सन् प्राणवायुमाविशति। तदनन्तरमूर्ध्वं गच्छन् स्वीयग्रन्थीन् विभज्य पृथक्-पृथक् ध्वनिरूपेषु परिवर्तितः सन् प्राणवायुः वर्णानभिव्यज्य तेषु वर्णेष्वेव लीनो भवति।

उपरितनोद्धरणद्वारा स्पष्टं भवति यत् मानसिकप्रत्ययः ( विचारः) कथं ध्वनित्वेनाभिव्यक्तो भवति। भाषायाः प्रकटीकरणे मुख्यं कारणं चेतनातत्त्वम् आत्मा वर्तते। चेतनापि बुद्धिं विना कार्यं कर्तुं सर्वथासमर्थैव वर्तते। अत एव बुद्ध्यभावे पशुपक्षिणः भाषां प्रयोक्तुमसमर्था भवन्ति। मानवे बुद्धिचेतनयोः समन्वयो विद्यते, तस्माद् विचाराभिव्यक्तौ समर्थो भवति। एतत्कृते प्रेरणातत्त्वस्य मनसोऽपि आवश्यकता भवति। मनः प्राणवायोः सहयोगाद् वाग्यन्त्रस्य नियमितसञ्चालनाद् ध्वनिमुत्पादयति। इत्थं ध्वन्युत्पत्तौ चत्वारि तत्त्वानि नितरामावश्यकानि भवन्ति। तानि च – मानसिकसम्प्रत्ययः ( भावः, विचारः), वक्तुमिच्छा, प्राणवायुसहयोगः, वाग्यन्त्रस्य नियमितसञ्चालनम्।

**वाक्यपदीयानुसारं पदविज्ञानम्**

भाषायाः सार्थकमङ्गं वाक्यं भवति। वाक्यमपि पदैः, पदञ्च वर्णैर्निर्मितं भवति। पदे विद्यमानस्य

[9]महाभाष्यम्, प्रदीपटीका- आ-1, [10]पाणिनीयशिक्षा 6-9 , [11]वाक्यपदीयम्, 1. 112-115

प्रत्येकं वर्णस्य कश्चन सार्थकोऽर्थो न हि भवति तथैव वाक्यप्रयोगं विना पदानामपि कश्चन सार्थकोऽर्थो न वर्तत इति। अयमेव भावः भर्तृहरिणा वाक्यपदीये समुदीरितः –

**पदे न वर्णा विद्यन्ते वर्णेष्ववयवा इव।**

**वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चन ।।**[12]

वाक्ये विद्यमाननि पदानि विश्लेष्यन्ते यद् इदं कर्तृपदम् , इदञ्च कर्मपदम्, इदं क्रियापदमिति। इयमेव वाक्यविश्लेषणप्रक्रिया भर्तृहरिणा अपोद्धारः इति नाम्ना निरूपिता। अपोद्धारद्वारैव वाक्ये विद्यमानस्य प्रत्येकं पदस्यार्थो ज्ञाप्यते तत्प्रकृतिप्रत्ययादयश्च बोध्यन्ते। यथोक्तञ्च भर्तृहरिणा-

**यथा पदे विभज्यन्ते प्रकृति-प्रत्ययादयः।**

**अपोद्धारस्तथा वाक्ये पदानामुपवर्ण्यते ।।**[13]

वाक्यपदीये भर्तृहरिणा पदविभागे प्राच्यानां मतोल्लेखो कृतो वर्तते यत् वार्ताक्षौदुम्बरायणाभ्यां भाषायाः नामाख्यातौ इति द्वावेव भेदौ स्वीकृतौ। कैश्चिच्च नामाख्यातोपसर्गनिपादयः चत्वारो भेदा अमन्यन्त। कैश्चिच्च पञ्चमं कर्मप्रवचनीयमित्यपि स्वीक्रियत इति। यथोक्तम् -

**द्विधा कैश्चित् पदं भिन्नं चतुर्धा पञ्चधाऽपि वा।**

**अपोद्धृत्यैव वाक्येभ्यः प्रकृतिप्रत्ययादिवत् ।।**[14]

पदानां लिङ्गविषये वाक्यपदीयकारेण लिङ्गसमुद्देशे स्पष्टीकृतं यत् कस्यचिदपि पदस्य लिङ्गनिर्धारणं वक्तुः विवक्षाऽऽधारितं वर्तते।

**स्थितेषु त्रिषु लिङ्गेषु विवक्षानियमाश्रयः।**

**कस्यचिच्छब्दसंस्कारे व्यापारः क्वचिदिष्यते ।।**[15]

पदेषु वचनानां सङ्ख्याविषये वाक्यपदीये निरूपितं यद् वस्तुनोः भेदाभेदकारणं सङ्ख्यैव वर्तते। अपि च एकत्वमिति सङ्ख्यैव द्वित्वादीनां कारणं भवति , तेन विना अन्यासां सङ्ख्यानां सम्भवो न भवति।

**भेदाभेदविभागो हि लोके सङ्ख्यानिबन्धनः।**

**द्वित्वादियोनिरेकत्वं भेदास्तत्पूर्वका यतः।**

**विना तेन न सङ्ख्यानामन्यासामस्ति सम्भवः ।।**[16]

कारकविषयेऽपि भर्तृहरिणोक्तं यत् क्रिया साध्यं कारकञ्च साधनं वर्तते एवं क्रियासिद्धत्वात् तत्साधनं कारकमुच्यते।

**गुणभावेन साकाङ्क्षं तत्र नाम प्रवर्तते।**

**साध्यत्वेन निमित्तानि क्रियापदमपेक्षते ।।**[17]

**वाक्यपदीयानुसारं वाक्यविज्ञानम्**

यत्र वाक्यसंरचनायाः, वाक्यप्रकाराणां, वाक्येषु परिवर्तनानां, वाक्यपदविन्यासस्य वाक्यानाञ्च

[12]वाक्यपदीयम् – 1.73, [13]तत्रैव- 2.10, [14]तत्रैव- 3.1, [15]तत्रैव- लिङ्गसमुद्देशः-19, [16]तत्रैव- 3.1,15, [17]वाक्यपदीयम् – 2-49

विश्लेषणं भवति तद्वाक्यविज्ञानं कथ्यते। इत्थं वाक्यविज्ञाने वाक्यसम्बद्धानि सर्वाणि तत्त्वानि विश्लेष्यन्ते। पदविज्ञाने पदानां संरचना विश्लेष्यते अतस्तस्मिन् पदसम्बद्धानां संज्ञा-क्रिया-विशेषण-कारक-विभक्तिवचनलिङ्गादीनां विवेचनं क्रियते, किन्तु वाक्यविज्ञाने पूर्वोक्तक्रमेण निर्मितानि पदानि कुत्र कथञ्च प्रयुज्यन्ते, तानि कथं सार्थकार्थप्रतिपत्तये व्यवस्थाप्यन्ते इत्यादीनां विवेचनं भवति।

तात्त्विकदृष्ट्या ध्वनि-पद-वाक्येषु मौलिकभेदः वर्तत एव। ध्वनिः मूलतः उच्चारणसम्बद्धो भवति यश्च शारीरिकव्यापारादुत्पद्यते। पदे ध्वनेः सार्थकतायाश्च द्वयोः समन्वयो भवति। ध्वनिः शारीरिकपक्षः सार्थकता च मानसिकपक्षो वर्तते। एतद्द्वयोः समन्वयात् पदं वाक्ये प्रयोक्तुमर्हं भवति। वाक्ये विचारः, विचाराणां समन्वयः, सार्थकसमन्वितरूपेणाभिव्यक्तिः, चिन्तनादीनि तत्त्वानि विद्यन्ते। विचाराणां पूर्णाभिव्यक्तिः वाक्यादेव सम्भवति अतो वाक्यमेव भाषायाः सार्थकः लघुतम एकको वर्तते। इदमेव मतं समर्थयन् वाक्यपदीयकारः भर्तृहरिः कथयति यत् पदेषु वर्णानां स्वतन्त्रसत्ता न भवति न च वर्णेषु अवयवानाम् , वाक्याद् भिन्ना कस्यचिदपि स्वतन्त्र सत्ता न विद्यते –

**पदे न वर्णा विद्यन्ते वर्णेष्ववयवा इव।**
**वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चन।।**[18]

भर्तृहरिणा वाक्यंपरिभाषयता उक्तं यत् –

**साकाङ्क्षावयवं भेदे परानाकाङ्क्षशब्दकम्।**
**कर्मप्रधानं गुणवदेकार्थं वाक्यमिष्यते।।**[19]

अर्थाद् एकार्थनिरूपकं गुणवत् कर्मप्रधानं पदसमूहं वाक्यमिति। वाक्यावस्थायाम् अस्य पदानि पदान्तराकाङ्क्षां न कथयन्ति। विभागे च पदान्तरमपेक्षन्ते।

वाक्यपदीयस्य द्वितीयकाण्डे भर्तृहरिणा वाक्यविषये अष्टौ मतानि प्रतिपादितानि। तद्यथा-क्रियापदं, क्रियायुक्तकारकादिसमूहः, क्रियाकारकादिसमूहे विद्यमाना जातिः, क्रियादिसमूहगतोऽखण्डः शब्दः, क्रियादिपदानां क्रमविशेषः, क्रियादीनां बुद्धिगतसमन्वयः, साकाङ्क्षप्रथमपदं साकाङ्क्षञ्च पृथक्-पृथक् प्रत्येकं पदञ्चेत्यादयः क्रमशः वाक्यत्वं प्राप्नुवन्ति।

**आख्यातशब्दः संघातो जातिः संघातवर्तिनी।**
**एकोऽनवयवः शब्दः क्रमो बुद्ध्यनुसंहतिः।।**
**पदमाद्यं पृथक् सर्वपदं साकाङ्क्षमित्यपि।**
**वाक्यं प्रति मतिर्भिन्ना बहुधा न्यायवादिनाम्।।**[20]

## वाक्यपदीयानुसारम् अर्थविज्ञानम्

अर्थः भाषायाः आत्मरूपो वर्तते। यथा शरीरज्ञानात्परम् आत्मनः ज्ञानमपेक्षितं भवति तद्वद्

[18]वाक्यपदीयम्- 1-73, [19]वाक्यपदीयम्- 2.4, [20]वाक्यपदीयम् -2.1-2

भाषायाः शरीरावयवभूतानां ध्वनि-पद-वाक्यानां ज्ञानात्परं तदात्मभूततत्त्वस्यार्थस्यापि ज्ञानमपेक्षितमनिवार्यञ्च वर्तते । अर्थस्य महत्त्वं प्रतिपादयन् महाभाष्यकारो निगदति यद् अर्थज्ञानं विना यः किञ्चिदधीते तदध्ययनं ज्ञानज्योतिः प्रकाशयितुं सर्वथा असमर्थं भवति यथा- अग्निरहिते स्थाने स्थापितं शुष्केन्धनं तज्ज्वालयितुं समर्थं न भवति –

**यदधीतमविज्ञातं निगदेनैव शब्द्यते ।**

**अनग्नाविव शुष्केन्धौ न तज्ज्वलति कर्हिचित् ।।**[21]

भर्तृहरिणा वाक्यपदीयेऽर्थं परिभाषयिता उक्तं यत् –

**यस्मिंस्तूच्चरिते शब्दे यदा योऽर्थः प्रतीयते ।**

**तमाहुरर्थं तस्यैव नान्यदर्थस्य लक्षणम् ।।**[22]

अर्थात् शब्दद्वारा यस्यार्थस्य प्रतीतिर्भवति स एवार्थः कथ्यते एतदतिरिच्यार्थस्यान्यद् लक्षणं न विद्यते । अनेन स्पष्टं भवति यदर्थस्य सामान्यं लक्षणं प्रतीतिर्वर्तते । भाषाशास्त्रीयदृष्ट्या शब्दार्थौ मिथः अन्योन्याश्रितौ वर्तेते । शब्दः शरीरम् अर्थश्चात्मा वर्तते । अर्थं विना शब्दः निर्जीवः तथैव शब्दं विना अर्थोऽपि निष्प्रयोज्यो भवति । शब्दः भाषाया मूर्तरूपम् अर्थस्य तच्चेतनतामावहति । अतः सार्थकप्रयोगाय उभयोः शब्दार्थयोः समन्वितरूपेणोपस्थितिः अनिवार्या वर्तते । अत एव भर्तृहरिणा वाक्यपदीये शब्दार्थौ एकस्यैव तत्त्वस्याभिन्नावयवौ मतौ–

**एकस्यैवात्मनो भेदौ शब्दार्थावपृथक् स्थितौ ।।**[23]

भर्तृहरिणा शब्दार्थयोः वाचकवाच्यसम्बन्धोऽमन्यत अपि च अभिधाशक्तौ एव लक्षणाव्यञ्जनयोरपि अन्तर्भावोऽमन्यत-

**अस्याऽयं वाचको वाच्य इति षष्ठ्या प्रतीयते ।**

**योगः शब्दार्थयोस्तत्त्वमप्यतो व्यपदिश्यते ।।**[24]

---

[21]महाभाष्यम्- आ.1, [22]वाक्यपदीयम्-2.328, [23]तत्रैव 2.31, [24]तत्रैव-3.3

भर्तृहरिणोक्तं यत् केवलं शब्दाः सत्तामात्रकारणाद् अर्थबोधका न भवन्ति अपि च यावत् शब्दाः श्रोत्रेन्द्रियस्य मनसो वा विषया न भवन्ति तावद् अर्थबोधने सर्वथा असमर्था हि भवन्ति-

**विषयत्वमनापन्नैः शब्दैर्नार्थः प्रतीयते ।**

**न सत्तयैव तेऽर्थानामगृहीताः प्रकाशकाः ।।**[25]

समानार्थकानां नानार्थकानाञ्च शब्दानां कथमर्थनिर्णयो भवतीति विषये भर्तृहरिणा उक्तं यत् समानार्थकानां नानार्थकानाञ्च शब्दानां निर्णयः प्रयोक्तुः आधारेण भवति । प्रयोक्ता शब्दं यस्मिन्नर्थे प्रयोक्तुमिच्छति स एवार्थोऽभिधेयो भवति-

**बहुष्वेकाभिधानेषु सर्वेष्वेकार्थकारिषु ।**

**यत् प्रयोक्ताऽभिसन्धत्ते शब्दस्तत्रावतिष्ठते ।।**[26]

नानार्थकानां शब्दानामर्थनिर्णयस्य भर्तृहरिणा चतुर्दश साधनानि प्रोक्तानि । तद्यथा-

**संसर्गो विप्रयोगश्च साहचर्यं विरोधिता ।**

**अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ।।**

**सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।**
**शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ।।**[27]

**शोधनिष्कर्षः ( conclusions )**

भर्तृहरिकृते वाक्यपदीये भाषावैज्ञानिकतत्त्वानां परिशीलनमधिकृत्य प्रवृत्तस्यास्य शोधपत्रस्य निष्कर्षा निम्नलिखितरूपेणात्र प्रस्तूयन्ते -

भर्तृहरिकृते वाक्यपदीयेभाषोत्पत्तिसिद्धान्तः, ध्वनिविमर्शः, पदविमर्शः, वाक्यविमर्शः, अर्थविमर्शश्चेत्यादीनिनैकानिभाषावैज्ञानिकतत्वानिविवेचितानि वर्तन्ते ।

भर्तृहरिकृते वाक्यपदीये भाषोत्पत्तेः प्रतिभासिद्धान्तः प्रतिपादितो वर्तते । तथा प्रतिभा एव भाषाया आधारत्वेन स्वीकृता सन्ति।

भर्तृहरिकृते वाक्यपदीये ध्वनेः वैज्ञानिकः विमर्शः प्रस्तुतो वर्तते तथा ध्वनेः उत्पत्तौ भावः उत विचारः,

[25]वाक्यपदीयम्– 1.56, [26]तत्रैव – 2.402, [27]तत्रैव- 2.317-318

विवक्षा, प्राणवायुसहयोगः, वाग्यन्त्रस्य सञ्चालनञ्चेत्यादीनि चत्वारि तत्त्वानि आवश्यकानि मतानि ।।
भर्तृहरिकृते वाक्यपदीये पदविज्ञानस्य विस्तृतं विवेचनं वर्तते । अपि च पदसम्बन्धिनां वचन-कारक-लिङ्गप्रभृतीनामपि विशदं विवेचनं कृतमस्ति ।
भर्तृहरिकृते वाक्यपदीये वाक्यविज्ञानस्य नैकानि तत्त्वानि विवेचितानि वर्तन्ते । अपि च आख्यातशब्दजातिसंघातभेदेन वाक्यमष्टधा परिभाषितम् ।
भर्तृहरिकृते वाक्यपदीये अर्थविज्ञानस्य विस्तृतो विमर्शः प्रस्तुतो वर्तते । तथा शब्दार्थौ एकस्यैव तत्त्वस्याभिन्नावयवौ मतौ । अपि च नानार्थकशब्दानामर्थनिर्णयाय संयोगादीनि चतुर्दश साधनानि वर्णितानि।

इत्थं प्रकृतेऽस्मिन् शोधपत्रे वाक्यपदीये निरूपितानि भाषावैज्ञानिकतत्त्वान्येव विवेचितानि । तत्रापि विशिष्य शोधपत्रेऽस्मिन् वाक्यपदीये निरूपितः भाषोत्पत्तिसिद्धान्तः, ध्वनिविज्ञानं, पदविज्ञानं, वाक्यविज्ञानम् अर्थविज्ञानञ्चेत्यादीनां विवेचनं विश्लेषणञ्च कृतं वर्तते । तेषां विवेचन निष्कर्षोऽयमवाप्तः यत् वाक्यपदीये आचार्येण भर्तृहरिणा भाषाविज्ञानसम्बन्धीनि नैकानि तत्त्वानि विवेचितानि वर्तन्ते यानि च अद्यापि भाषाशास्त्रिणः अत्यन्तमुपकुर्वन्ति ।

**********

**सन्दर्भग्रन्थसूची**( Bibliography )


1. अय्यर, के. ए. सुब्रह्मण्यम्. भर्तृहरि : जयपुर : हिन्दी ग्रन्थ अकादमी ,1991.
2. कुमार, प्रमोद. विचार और भाषा: नई दिल्ली : ग्रन्थ शिल्पी प्रकाशन, 2007.
3. जोशी, हेमचन्द्र. भाषावैज्ञानिक सम्बन्ध:लखनऊ : रमाप्रकाशन,1977 .
4. तिवारी, भोलानाथ. भाषा विज्ञान: 57 तम संस्करण. इलाहाबाद : किताब महल प्रकाशन, 2014.
5. तिवारी, भोलानाथ. शब्द विज्ञान : दिल्ली : शब्दकार प्रकाशन, 1982.
6. तिवारी, हरिनारायण. वाक्यपदीयम् : वाराणसी : चौखम्भा प्रकाशन ,1996.
7. दास, श्यामसुन्दर. भाषाविज्ञान : जयपुर : अनु प्रकाशन , 2008.
8. द्विवेदी, कपिलदेव. भाषाविज्ञान एवं भाषा शास्त्र : त्रयोदश संस्करण. वाराणसी : विश्वविद्यालय प्रकाशन, 2012.
9. व्यास, भोलानाथ. संस्कृत का भाषा शास्त्रीय अध्ययन : वाराणसी : वि.वि. प्रकाशन, 1991.

# शिक्षणाधिगमयोः मनोवैज्ञानिकप्राविधिकतत्त्वानामनुप्रयोगे शिक्षकः

डॉ.डम्बरुधरपतिः *

शिक्षाजगति प्रशिक्षणार्थिनां कृते प्रत्यहं प्रदीयमानशिक्षणं शिक्षायाः गुणात्मकस्वरूपं व्यनक्ति। प्रशिक्षणकेन्द्रे विविधाधुनिकशास्त्राणाम् अध्ययन–अध्यापनपरम्परा शिक्षणकौशलानां विकासाय सम्पाद्यते। शिक्षाशास्त्रे मुख्यतया द्वयोः कक्षांगयोः महत्त्वं प्रचक्षते। यथा– शिक्षणम् अधिगमश्च। यदि अनयोः द्वयोः पदयोः कक्षाशिक्षणे सम्बन्धः संस्थाप्यते तर्हि , सामान्यतया समे वदन्ति–

**शिक्षणम् – अध्यापकः**
**अधिगमः – छात्रः**

अर्थात् शिक्षणस्य या क्रिया वर्तते सा केवलं शिक्षकस्य दायित्वमेव। तदनु अधिगमस्य यः सिद्धान्तो वर्तते सः केवलं छात्रस्य एव स्यात्।

अत्र शोधलेखकस्य प्रश्नः समुत्पद्यते। अधिगमस्य ये सिद्धान्ताः वर्तन्ते यदि तेषां ज्ञानं शिक्षकेषु न भविष्यति तर्हि शिक्षणं सफलं भविष्यति वा? अभिप्रायो भवति–प्रथमतः अधिगमपद्धतीनां ज्ञानं शिक्षके भवेत् तदनु शिक्षणं स्यात्। यदि अधिगमसिद्धान्तानां ज्ञानं प्रथमतः शिक्षकेषु भविष्यति तदनु छात्रान् प्रेरयितुं समर्थाः भविष्यन्ति। अतःसम्बन्धविषयके चित्रं प्रदर्शितम्–

**अधिगमः – अध्यापकः**
**शिक्षणम् – अध्यापकः**
**अधिगमः – छात्रः**

शोधशीर्षके शिक्षणाधिगमयोः पदयोः प्रयोगः संलक्ष्यते। प्रथमतः अनयोः अर्थः ज्ञातव्यः।

**शिक्षणम्**–कस्यापि प्रकरणस्य सम्प्रत्ययात्मकज्ञानं प्राप्य तदनु अवबोधनानुकूलम् उपस्थापनं नाम शिक्षणम्।

**शिक्षणे अध्यापकः**

**वेधा अदृप्तो अग्निर्विजान–न्नूधर्न गोनां स्वाद्मा पितूनाम्।**
**जने न शेव आहुर्यः सन्, मध्ये निषत्तो रण्वो दुरोणे।।**

ऋग. / 1 / 69 / 2

अध्यापकेषु छात्रनिर्माणगुणाः स्युः। स्वस्य ज्ञानस्य उपरि कदापि अभिमानः नावश्यकः। अग्निः इव अध्यापकेषु तेजपूर्णनेतृत्वगुणाः भवेयुः। स्वाध्यापनविषयस्य विशेषज्ञानं स्यात्। यथा गौ किमपि किमपि खादति परम् अस्मान् शुद्धदुग्धं प्रयच्छति तथैव , अध्यापकाः सदा स्वाध्यायशीलाः स्युः। विषयाधारितविविधपुस्तकानाम् अध्ययनं सर्वदा कृत्वा आवश्यकतत्त्वानि कक्षायां प्रदातव्यानि। शिक्षणकार्यं रुचिपूर्णतया सम्पादनीयम्।

** संविदाध्यापकः, शिक्षाशास्त्रविभागः, राष्ट्रियसंस्कृतसंस्थानम्, (मा.वि) भोपालपरिसरः।*

**शिक्षणे अध्यापकः**

**पुत्रादनन्तरं शिष्य इति धर्मविदो विदुः।**
**तेनापि निमित्तेन प्रियो द्रोणस्य पाण्डवः।।**

विराट 50/21

स्वपुत्रादनन्तरं शिष्यः भवेदिति प्रत्येकं शिक्षकस्य चिन्तनं स्यात्। वाक्यमिदं धर्मस्य ज्ञाता वदति। अतः द्रोणाचार्यम् अर्जुनः प्रियो वर्तते।

**अधिगमः—**

पदानुपदं सरलतया प्रबुद्ध्य क्षणानुक्षणे अनुप्रयोगसामर्थ्यं नाम अधिगमः।

अधिगमः—




शोधशीर्षकस्य द्वितीयपदसोपानस्य चर्चां कुर्मः। यत्र मनोवैज्ञानिकतत्त्वं, प्राविधिकतत्त्वं तयोः अनुप्रयोगविषयकं पदं निगदितमस्ति। प्रथमतः मनोवैज्ञानिकतत्त्वं—

प्रश्नः — **किं नाम मनोवैज्ञानिकतत्त्वम्?**

किं थार्नडाईक—स्किनर—पावलवादिसिद्धान्तानाम् अध्ययनं नाम मनोवैज्ञानिकतत्त्वम् ? **उत**

TAT,CAT,IBT इत्येषाम् अध्ययनं नाम मनोवैज्ञानिकतत्त्वं वा?

अवबोधनावसरे एतद् मनोवैज्ञानिकतत्त्वं नेति ज्ञायते।

तर्हि तत्त्वं किम्?

मनोवैज्ञानिकतत्त्वानि—

बालस्वभावस्य व्यवहारस्य च अध्ययनम्।

अध्ययने रुचिस्थापनम्।

- ज्ञानाभिवर्द्धने योजनानिर्माणम्।
- बालानां मूलप्रवृत्तीनां ज्ञानम्।
- कक्षासमस्यानां समाधानात्मकज्ञानम्।
- अनुशासने सहायता।
- उपयोगात्मकपाठ्यक्रमस्य निर्माणम्।
- समुचितशिक्षणविधीनां प्रयोगः।
- मूल्यांकनस्य नवविधीनां प्रयोगः।

प्रश्नः – **किं नाम प्राविधिकतत्त्वम्?**

किं शिक्षणकौशल–शिक्षणसूत्र–सम्प्रेषणादिसिद्धान्तानाम् अध्ययनं नाम प्राविधिकतत्त्वम् ? **उत**

COMPUTER, INTERNET, TEACHING TOOLS इत्येषाम् अध्ययनं नाम प्राविधिकतत्त्वं वा?

अवबोधनावसरे एतद् प्राविधिकतत्त्वं नेति ज्ञायते। तर्हि तत्त्वं किम्?

प्राविधिकतत्त्वानि–

- सम्प्रेषणकौशलस्य ज्ञानम्।
- बोधयितुम् आधुनिकयन्त्राणां प्रयोगसामर्थ्यम्।
- पाठोपस्थापनकौशलम्।
- प्रश्नोत्तरप्रक्रियायाः ज्ञानम्।
- मूल्यांकनपद्धतीनां ज्ञानम्।
- अन्तःक्रियाविश्लेषणपद्धतेः ज्ञानम्।
- उद्देश्यानुकूलं शिक्षणम्।
- मनोवैज्ञानिकावश्यकतानां पूर्तिः।
- शिक्षणे आत्मविश्वासस्य भाषापटुतायाः ज्ञानम्।

**मनोवैज्ञानिकप्राविधिकोद्देश्यानि–**



## अनुप्रयोगस्य सोपानानि




## पूर्वज्ञानम्




## क्रियान्वयनम्



## अनुप्रयोगः

यथा शाकनिर्माणे एतेषां परिमाणात्मकज्ञानम् अपेक्षते तदनु खाद्यं रुचिकरं विद्यते, तथैव शिक्षणे मनोवैज्ञानिकतत्त्वानां प्राविधिकतत्त्वानां प्रयोगं कुर्यात् येन सफलशिक्षणं भविष्यति।



**शाकनिर्माणे समेषां परिमाणज्ञानम्**

अनुप्रयोगे शिक्षकः



















**********

## सन्दर्भग्रन्थाः–


1. पुरोहित,जगदीश नारायण (2008)भावी शिक्षकों के लिए आधारभूत कार्यक्रम, राजस्थान हिन्दी ग्रन्थ अकादमी, जयपुर।
2. पाठक, पी. डी. (2011)शिक्षा मनाविज्ञानम , श्री विनोदपुस्तक मन्दिर, आगरा–2।
3. सिंह, अरुण कुमार (2009) मनोविज्ञान, समाजशास्त्र तथा शिक्षा में शोध विधियॉ, मोतिलाल बनारसीदास, दिल्ली।
4. शर्मा ए. पी. (2006) भावी शिक्षक एवं शिक्षा तकनीकी, राजहंस, जयपुर।
5. राय, पारस नाथ, (2008) अनुसन्धान परिचय, लक्ष्मी नारायण अग्रवाल, आगरा।
6 https://www.ed.gov.nl.ca/edu/k12/curriculum/guides/health/elementary/process.pdf
7 https://www.researchgate.net/publication/324877430_Using_Educational_Psychology_for_Better_Teaching-Learning_Environment

# शिक्षणाधिगमप्रक्रियायाम् अधिगमसिद्धान्तानां विनियोगः

✍ डॉ. रुद्रनारायणनरसिंहमिश्रः *

शिक्षणं निरन्तरा जायमाना काचित् प्रक्रिया। स्मिथमहोदयानुसारं शिक्षणं हि सामूहिककार्यं भवति। शिक्षणं नाम सततं प्रवर्तमाना काचन सामाजिकी प्रक्रिया। प्रत्येकस्मिन् देशे तत्रत्यशासनव्यवस्थायाः सामाजिकदर्शनस्य सामाजिकपरिस्थितीनां तदीयमूल्यानां च प्रभावः शिक्षणे अवलोक्यते।

विविधानां दर्शनानां संस्कृतीनां सामाजिकस्वरूपाणां च आधारेण शिक्षणस्यार्थः प्रभावितः भवति। आधुनिकैः शिक्षाविद्भिः शिक्षा त्रिध्रुवीया प्रक्रिया इत्युच्यते। अस्यां प्रक्रियायां शिक्षकः, छात्रः, पाठ्यक्रमः त्रयोऽपि मिलित्वा शिक्षारूपमन्दिरं निर्मान्ति। रायबर्नमहोदयस्य मते तत्र त्रयः बिन्दवः भवन्ति - शिक्षकः, छात्रः, पाठ्यक्रमः चेति । शिक्षणम् एतेषु त्रयेषु सम्बन्धं स्थापयति। There are three focal points in education- The teacher, the child and the subject. Teaching is the first place in relationship which established between these three.

इतोऽपि स्पष्टतया विचारेण ज्ञायते यत् शिक्षणं तादृशी काचनप्रक्रिया, या शिक्षकमाध्यमेन छात्रान् पाठ्यविषयाणामधिगमार्थं प्रेरयति। कक्षायां शिक्षार्थिभ्यः शिक्षकेन प्रदीयमानं ज्ञानं परामर्शो वा शिक्षणं भवति। परन्तु शिक्षणं तादृशी प्रक्रिया यत्र शिक्षार्थिना येन केनाऽपि माध्यमेन जन्मतः मृत्युं यावत् यत्किमपि शिक्ष्यते तत् शिक्षणमिति।

मानवः आजीवमधिगम्यते। यतोहि प्रत्येकं व्यक्तौ अधिगमस्य जन्मजातक्षमता भवति, अतः सः आजीवनमधिगच्छति। व्यक्तेः अधिगमाय न किञ्चित् सुनिश्चितं स्थानमथवा न कोऽपि निश्चितः समयः। शिक्षासंस्थामतिरिच्य सः बहिरपि संस्थाभ्यः शिक्षां गृह्णाति। अधिगमशब्दः शिक्षणस्य परिणामाय प्रयुज्यते। यतः अधिगमस्यार्थः भवति व्यवहारपरिवर्तनम्। उदाहरणार्थम् - कश्चन लघुबालकः ज्वलन्तं दीपं स्पृशति। ज्वलन्तदीपस्य स्पर्शेण तस्य हस्तः दग्धो भवति। तेन सः पीडामनुभवति। अतो अग्रे सः कदापि ज्वलन्तदीपस्य स्पर्शं न करिष्यति। एतदेव अनुभवेन अधिगमेति उच्यते। दैनन्दिनजीवने अस्माकं कृते अधिगमस्य बहूनि उदाहरणानि सन्ति पाठस्य स्मरणं, गणितप्रश्नानां समाधानमित्यादीनि।

शिक्षणाधिगमप्रक्रिया बहुमुखी अस्ति । शिक्षणस्य प्रमुखकार्यं भवति अधिगमक्षेत्रे प्रभावशीलतासम्पादनमिति । अधिगमेन बालकस्य व्यवहारपरिवर्तनं संभवति। व्यवहारपरिवर्तनमपि स्वतः भवितुं न शक्नोति। व्यवहारपरिवर्तनस्य दृष्ट्या शिक्षणाधिगमप्रक्रियाया आयोजनं भवति।

निर्धारितोद्देश्यानां संप्राप्तेः कारणात् शिक्षणस्यायोजनं भवति। शिक्षणाधिगमप्रक्रियायाः संचालने शिक्षकः उद्देश्यानि निर्माति। तदनन्तरं तेषामुद्देश्यानामनुसारं शिक्षणपरिस्थितेः निर्माणं करोति। शिक्षणपरिस्थितेः निर्माणार्थं कदाचित् विवरणं प्रस्तौति। कदाचित् व्याख्यानेन पुनः विचारविमर्शेण च शिक्षणपरिस्थितिं निर्माति। शिक्षणपरिस्थितेः निर्माणादनन्तरमथवा निर्माणकाले च छात्राः कथं तिष्ठन्ति ? सक्रियाः निष्क्रियाः वा। यदा शिक्षकः शिक्षणपरिस्थितिं निर्माति, तदा छात्राः निष्क्रियाः न भूत्वा



* अतिथि-अध्यापकः, शिक्षाशास्त्रविभागः, राष्ट्रियसंस्कृतसंस्थानम्, (मा.वि) लखनऊपरिसरः।

मानसिकरूपेण क्रियाशीलाः भवन्ति। इयमेव तेषामन्तःक्रिया। परिस्थितिनिर्माणस्य प्रयोजनं तदा सिद्धं भवति यदा छात्राः परिस्थितिसन्दर्भे अन्तःक्रियां सम्पादयन्ति। अतः ज्ञानेन्द्रियाणां सक्रियत्वम् अधिगमस्य दृष्ट्या अत्यधिकमावश्यकमस्ति। अनुभवाः अधिगमस्य आधाराः भवन्ति। निर्धारितोद्देश्यानां प्राप्तये यानि यानि प्रयत्नानि कृतानि तानि सफलानि जातानि न वा ? शिक्षणस्य परिस्थित्याः निर्माणं समीचीनं न वा ? छात्राणामन्तःक्रिया सकारात्मकरूपेण प्रचलति न वा ? एतेषां विषयाणां मूल्याङ्कनं भवति। शिक्षकस्य शिक्षणपरिस्थित्याः प्रभावोत्पादकताया अपि च ज्ञानमस्य पदस्य मुख्योऽद्देश्यं भवति।

अधिगमः शिक्षणप्रक्रियायाम् एकं मुख्यं तत्वं वर्तते। अधिगमं विना शिक्षणस्य औचित्यमपि न फलति। किञ्च व्यवहारः परिवर्तयितुम् अधिगमस्य आलम्बनं स्वीकर्तव्यं शिक्षकैः। शिक्षणं तावत् अधिगममाश्रित्य प्रवर्तते। एतावता वयम् अधिगमस्य मण्डनं कुर्वन्तः तत्सिद्धान्तान् च छात्रान् पाठयन्तः स्मः, परमस्माकं पाठनसन्दर्भे इमे अधिगमसिद्धान्ताः अस्मान् कथम् उपकुर्युः इति इत्यत्र किञ्चिदिव चर्चयामः -

**1. रुचेः अवधानस्य च सिद्धान्तः-** रुचिर्नाम वस्तुनः विषयस्य वा विषये अनुकूलदृष्टिकोणः। अवधानं नाम मनसः एकाग्रता। एकः अध्यापकः शिक्षयितुं तदैव सफलः भवितुमर्हति, यदा तस्य छात्राणामध्ययने रुचिः अवधानञ्च भवतः। अवधानस्य रुचेश्च अभावे नूतनज्ञानस्य ग्रहणमसम्भवमेवास्ति। अध्यापकः यावत्पर्यन्तं छात्रेषु रुच्योत्पादनं न प्रोत्साहयति तावत् तेन क्रियमाणानि प्रयत्नानि असफलानि भवन्ति। सुदृढोद्दीपकस्य उपस्थितिः, विषयप्रस्तावः, नावीन्यं, वस्तूनां परिवर्तनं, कक्षायामध्यापकस्य चलनमित्यादयः छात्राणामवधानं संस्थापयितुमुपकुर्वन्ति। स्वयमेव कक्षायाः वातावरणम्, अध्यापकस्य व्यक्तित्वं, पाठस्य प्रस्तुतीकरणं, सहायकसामग्रीणां प्रयोगादयः छात्रेषु रुच्योत्पादनस्य साधनानि सन्ति।

**2. प्रेरणायाः सिद्धान्तः-** प्रेरणा आवश्यकता द्वारा आरभ्यमाना एका मनोवैज्ञानिकी आन्तरिकप्रक्रिया अस्ति। इयञ्च तां क्रियामाकर्षति या च तस्याः आवश्यकतां पूरयेत्। उत्प्रेरणा, अभिप्रेरणा, इच्छाशक्तिः, मनोरथं, सङ्कल्पः, उत्साहः दृष्टिकोणादीनि नामान्तराणि प्रेरणायाः सन्ति। प्रेरणा ज्ञानप्राप्तेः हृदयम् उत प्रभावपूर्णप्रतिनिधिरपि कथ्यते। ज्ञानं, ध्यानं, रुचिं प्रयत्नानि च वर्धयितुं प्रेरणा छात्रेभ्यः साहाय्यमाचरति, अर्थपूर्णज्ञानञ्च वर्धयति। पुरस्कारः, प्रतियोगिता, अभिलाषास्तरः दण्डनादयः अधिगन्तुः ज्ञानप्राप्तेः स्रोतांसि सन्ति। येषाञ्च प्रयोगः शिक्षकः स्वकक्षायाम् अध्यापनसन्दर्भे कर्तुं शक्नोति।

**3. उत्साहस्य सिद्धान्तः-** अस्य सिद्धान्तानुसारं यदा अधिगन्ता अधिगन्तुं सिद्धः भवति तदा सः अधिकसारल्येन, कुशलतया सन्तोषेण चाधिगच्छति। अतः तस्य ज्ञानप्राप्तिरपि अधिकार्थपूर्णा भवति। तस्मात् शिक्षकस्य कर्तव्यमस्ति यत् शिक्षणात् प्राक् बालकः मानसिकरूपेण अर्थपूर्णज्ञानप्राप्तये सिद्धः स्यात्।

**4. उद्देश्यस्य लक्ष्यस्य वा स्पष्टतायाः सिद्धान्तः-** अधिगमरूपात्मकं शिक्षणं सम्पादयितुं शिक्षकः पाठस्य उद्देश्यानि स्पष्टीकुर्यात्। शिक्षणसम्बद्धानि अन्यानि अपि लक्ष्यानि छात्राणां पुरस्तात् स्पष्टीकर्तव्यानि। येन कदापि छात्रेषु भ्रमस्य स्थितिर्नागच्छेत्।

**5. उपयोगितायाः सिद्धान्तः-** "प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते" इति न्यायेन मानवः स्वभावेन तासु एव क्रियासु भागं वहति, यासाञ्च अपेक्षा वर्तते । प्रयोजनम् अवसिते सति को वा मनुष्यः कर्म कर्तुं शक्नोति ? अतः शिक्षकः यदि अध्याप्यमानविषयस्य महत्वविषये विस्तृतां सूचनां ददाति तर्हि छात्राः प्रयोजनं विज्ञाय अध्येतुम् उत्सहन्ते। अपि च प्राप्यमानं ज्ञानमपि उपयोगी भवति।

**6. पूर्वज्ञानपरीक्षणस्य सिद्धान्तः-** सार्थकज्ञानप्राप्तये शिक्षकः आरम्भादेव मौखिकप्रश्नोत्तरीं, वाद-विवादं, लिखितपरीक्षां वा आयोज्य छात्राणां पूर्वज्ञानं परीक्ष्येत्। अनेन छात्राणां मानसिकस्तरं विज्ञाय तदनुरूपविधेः प्रविधेः वा अनुप्रयोग अध्यापकः स्वपाठने सम्मेलयेत् ।

**7. पारस्परिकसम्बन्धस्य सिद्धान्तः-** नूतनं ज्ञानं पुरातनज्ञानाधृतं स्यात्। येन नूतनज्ञानावाप्तये पूर्वतनं ज्ञानं साहाय्यमाचरेत्। अतः पूर्वज्ञानस्य नूतनज्ञानेन सह सम्बन्धकल्पनं परमावश्यकमस्ति। किञ्च अध्याप्यमानविषयाणां सम्बन्धः यावत् अस्माकं व्यावहारिकजीवनेन सह न भवति, तावत् प्राप्तं ज्ञानमपि निरर्थकमेव भवेत्। अतः अस्य सिद्धान्तानुसारम् उभयत्रापि पारस्परिकसम्बन्धकल्पनं नितरामपेक्षितम्। छात्रैः यः कोऽपि सिद्धान्तः उत सैद्धान्तिकभागः अधिगतः, तत्सर्वं जीवनस्य प्रायोगिकपक्षेण अवश्यं सम्बन्धितं स्यात्। नाम प्राप्यमानस्य ज्ञानस्य सम्बन्धः जीवनस्य विभिन्नक्रियाभिः समस्याभिश्च स्यादेव। यतः सुष्ठु अधिगमाय सैद्धान्तिकज्ञाने व्यावहारिकज्ञाने च साम्यं परमावश्यकम्।

**8. अभ्यासस्य सिद्धान्तः-** अभ्यासेन कौशलमायातीति अत्यन्तं सुप्रसिद्धं तथ्यमस्ति। अस्य सिद्धान्तानुसारम् अभ्यासेन प्रेरकप्रतिक्रिययोः निबन्धनं (S-R bond) दृढं भवति। अभ्यासस्य अथवा पुनरावृत्तेः न्यूनता (Lack of Exercise) एनं निबन्धनं शिथिलयति। प्राणिनां दैनिकक्रियाकलापेषु अभ्यासस्य अयं नियमः स्पष्टतया परिलक्ष्यते। भाषादिविषयाणां पाठान् छात्राः अभ्यासेन एव स्मरन्ति। परन्तु स्मृतपाठाः समये पुनः नैव अभ्यस्ताश्चेत् विस्मर्यन्ते। पाठस्य पुनः पुनः आवृत्या उद्दीपकानुक्रियाबन्धनं सुदृढं जायते, यस्य च परिणामात् अधिगमः सरलः सफलः चिरश्च भवति। विशिष्य संस्कृताध्यापने श्लोकानां, सूत्राणां च कण्ठस्थीकरणे अभ्यासनियमः भृशमुपकरोति।

**9. कर्टलेविनवर्यस्य क्षेत्रसिद्धान्तः-** क्षेत्रसिद्धान्तः शिक्षणाधिगमप्रक्रियायाम् अभिप्रेरणायाः महत्वं प्रकटयति। अतः छात्रेषु शिक्षणस्य अभिप्रेरणा उत्पादनीया। अस्य सिद्धान्तानुसारं कस्यापि कार्यस्य साफल्ये अथवा वैफल्ये तस्य प्राणिनः अहं समावेशः (Ego Involvement), आकांक्षास्तरः (Level of Aspiration), मनोवैज्ञानिकसन्तुष्ट्यादयश्च (Psychological satisfaction) उत्तरदायिनः भवन्ति। अतः शिक्षणाधिगमप्रक्रियायाम् एते सर्वेऽपि विषयाः नूनमवधेयाः।

**10. कृत्वाधिगमसिद्धान्तः-** वर्तमानकालिकसिद्धान्तेषु अयं सिद्धान्तः अत्यन्तं सुप्रसिद्धः अस्ति। कृत्वाधिगमो नाम स्वानुभवेन ज्ञानावाप्तिः। सिद्धान्तेऽस्मिन् छात्राः क्रियाभिः अधिगमाय प्रोत्साहनीयाः। यदा छात्राः कार्यं कृत्वा सुष्ठु वीक्ष्य यं विषयमधिगच्छन्ति, सः विषयः छात्राणां मनस्सु चिरं तिष्ठति। तस्मात् शिक्षणे छात्रेभ्यः क्रियाकलापान् कर्तुमधिकमवसराः कल्पनीयाः।

**11. प्रतिपुष्टेः सिद्धान्तः-** परिणामस्य ज्ञानमथवा अधिगन्तुः प्रगतिविषयकं ज्ञानं तस्य कार्यक्षमतां वर्धयति। इतोप्यधिकं ज्ञातुं प्रेरयति। अधिकां प्रयत्नशीलतां प्रोत्साहयति। यथा प्राथमिकशालायां लघुबालस्य उत्तरपुस्तिकायां सुन्दराणि अक्षराणि वीक्ष्य शिक्षका तत्र चाकलेहस्य चित्रं निर्माति। ततः चाकलेहस्य प्रतिपुष्ट्या बालः स्वपुस्तिकायामितोऽपि सुन्दराणि अक्षराणि लेखितुं प्रयतते । इत्थं छात्रान् प्रेरयितुं तेषामाकलनं कृत्वा समये-समये प्रतिपुष्टिः अवश्यं देया शिक्षकेन।

इत्थं मनोवैज्ञानिकैः निरूपिताः बहवो हि सिद्धान्ताः विलसन्ति । येषाञ्च प्रयोगेन शिक्षणाधिगमप्रक्रियायां सारल्यम्, अर्थपूर्णत्वं व्यावहारिकत्वं च आनेतुं शक्यते ।

**********

**संदर्भग्रन्थसूची -**

1. शिक्षण व अधिगम का. मनोविज्ञान आर.लाल. बु. डिपो, मेरठ, चतुर्थ संस्करण,. 2004.
2. अस्थाना डा. विपिन, अस्थाना श्वेता "मनोविज्ञान और शिक्षा में मापन एवं मूल्याकंन" विनोद पुस्तक मंदिर आगरा, 2007
3. बघेला डा. एच. एस ''अधिगम एवं शिक्षण के मनोसामाजिक आधार'', राजस्थान प्रकाशन, जयपुर, 2007
4. नासा सरला ''एज्यूकेशनल साइकालोजी'' मित्तल प्रकाशन, नई दिल्ली, 2005
5. पाण्डेय रामशकल, शैक्षिक मनोविज्ञान, आर एल बुक डिपो, मेरठ, 1990
6. परवीन डा. आबिदा, शिक्षा मनोविज्ञान, आस्था प्रकाशन, जयपुर 2008

**विद्या ह वै ब्राह्मणमाजगाम**
**गोपाय मा शेवधिष्टेऽहमस्मि ।**
**असूयकायानृजवेऽयताय**
**न मा ब्रूयाः वीर्यवती तथा स्याम् ।।**

निरुक्त. 2 /4 /1

**विद्या शौर्यं च दाक्ष्यं च बलं धैर्यं च पञ्चमम् ।**
**मित्राणि सहजान्याहुर्वर्तयन्ति हि बुधाः ।।**

शुक्रनीतिः 4 /13

# शिक्षणाधिगमयोः शास्त्रेषु उपनिषत्सु च वर्णिताः मनोवैज्ञानिकाभिगमाः

✍ डॉ. गणपति वि. हेगडे *

**यज्जाग्रतो दूरमुदैति दैवं तदु सुप्तस्य तथैवैति ।**
**दूरं गमं ज्योतिषां ज्योतिरेकं तन्मे मनः शिवसंकल्पमस्तु ॥**

प्राणिनाम् आन्तरिकबाह्यव्यवहारैः सम्बद्धं विशिष्टं ज्ञानमेव मनोविज्ञानमिति व्यवह्रियते । मनोविज्ञानशब्दस्य आंग्लभाषायां समानार्थकशब्दः "psychology" वर्तते । यूनानी ग्रीकभाषायां "psyche" एवं "logos" इति द्वाभ्यां शब्दाभ्यां निष्पन्नः शब्दः "psychology" इति । "psyche" इति शब्दस्यार्थः आत्मा इति । "logos" इति शब्दस्य अध्ययनं विचारः वा अर्थः । उक्तशब्दद्वयं मिलित्वा "psychology" इत्यस्य आत्मविचारः इत्यर्थः सम्पन्नः भवति । किन्तु अद्यत्वे मनोविज्ञानिनः आत्मविचारः अत्यन्तसूक्ष्मः इति मत्वा मनसः अध्ययनमेव मनोविज्ञानमिति व्यवहरन्ति । अस्य मनोविज्ञानस्य अध्ययनं विना छात्राणां मनसः अध्ययनं न भवति । यावत् पर्यन्तं छात्राणां मनसः अध्ययनं न करोति शिक्षकः, तावत् पर्यन्तं तस्य पाठः रुचिकरः, बोधप्रदश्च न भवति । यथा मनुष्यस्य स्वभावपरिवर्तनमानेतुं मनोविज्ञानस्य अपेक्षा वर्तते तथा आत्मविज्ञानार्थमपि मनोविज्ञानस्यापेक्षा अस्त्येव । तदुक्तं यथा-

**मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।**
**बन्धाय विषयासक्तं मुक्त्यै निर्विषयं स्मृतम् ॥**

(अमृतबिन्दूपनिषत्) इति ।

एतादृशमनोविज्ञानस्य आद्यप्रवर्तकाः मन्त्रद्रष्टारः ऋषयः एव भवितुमर्हन्ति । यतो हि ते स्वकठिनतपसा मन्त्राणां दर्शनं प्राप्य सकलजगतः कल्याणाय सन्मार्गं कल्पितवन्तः । उपनिषत्सु मनसः उत्पत्तिः वर्ण्यते "तन्मनोऽसृजत"(बृहदारण्यकोपनिषत्२.५.३) इत्यादिश्रुतेः । तथैव मनः कथं वर्धते इत्यत्र छान्दोग्योपनिषदि विस्तृतं विवरणं वर्तते । यथा – "अन्नमयं हि सोम्य मनः आपोमयः प्राणस्तोजोमयी वागिति" (छान्दोग्योपनिषत् ६.७.५) इति । "मनसैवानुद्रष्टव्यम्" (बृहदारण्यकोपनिषत्) इत्यादिश्रुतेः शुद्धं मनः आत्मदर्शनसाधनमपि भवतीत्युक्तम् । छात्राः अपि यदि शुद्धमनसा एकाग्रमनसा च पठन्ति तर्हि अवश्यं सम्यक् ज्ञानं प्राप्नुवन्ति । मनसः एकाग्रता प्राप्तये अपि स्वाध्यायः, ध्यानं, ब्रह्मचर्यं, यज्ञः, दानं, तपः

* *सहायकाचार्यः, वेदान्तविभागः, मुम्बादेवी-आदर्शसंस्कृतमहाविद्यालयः, मुम्बई ।*

इत्याद्याः बहवः उपायाः उपनिषत्सु दृश्यन्ते । तस्मात् इदमवगम्यते उपनिषत्सु मनोविज्ञानस्य विवरणं विशदतया उपलभ्यते इति।

प्राचीनकाले आचार्याः गुरुकुले मनोविज्ञानपद्धत्या बोधयन्ति स्म । आत्मनिरीक्षणबाह्यनिरीक्षणनियन्त्रितनिरीक्षण-व्यक्तिवृत्ताध्ययनोपचारमुक्तसंवादादयः ये मनोवैज्ञानिक-विधित्वेन आधुनिककाले प्रसिद्धाः सन्ति ते उपनिषत्सु शास्त्रेषु च प्रकारान्तरेण उपलभ्यन्ते । अनुसन्धानार्थम् उत्तमशिक्षणार्थं च शिक्षामनोविज्ञानस्य निम्नलिखितविधीनाम् उपयोगः क्रियते यथा-

- अन्तर्निरीक्षणविधिः Introspection Method)
- बाह्यनिरीक्षणविधिः (Retrospection Method)
- प्रयोगात्मकविधिः (Experimental Method)
- नैदानिकविधिः (Clinical Method)
- साक्षात्कारविधिः (Interview Method)
- प्रश्नावलीविधिः (Questionnaire Method )
- विकासात्मकविधिः (Developmental Method)
- जीवनवृत्तविधिः (Case History Method)
- सांख्यिकीयविश्लेषणविधिः (Statistical Analysis)
- मूल्यांकनविधिः (Evaluation Techniques) इत्यादयः बहवः विधयः सन्ति । एतेषु विधिषु उपनिषत्सु प्रतिपादिताः शिक्षामनोवैज्ञानिकविधयः सदृष्टान्तमत्र निरूप्यन्ते।

- **अन्तर्निरीक्षणविधिः (Introspection Method)**

छान्दोग्योपनिषदि पञ्चमाध्याये प्राणानाम् (इन्द्रियाणाम्) अहं श्रेष्ठः, अहं ज्येष्ठश्च इति कलहः श्रूयते। कलहस्य निर्णयार्थं प्रजापतेः सकाशं गताः प्राणाः । प्रजापतिः उत्तरं जानन्नपि एते स्वयम् अवगच्छेयुरिति भवत्सु यस्य गमनानन्तरं शरीरं पापिष्ठं भवति सः श्रेष्ठः इति वदति । प्राणाः एकैकं वर्षं शरीरात् प्रवासं गत्वा स्वस्य श्रेष्ठता नास्तीत्यवगतवन्तः । अन्ते मुख्यप्राणः एव श्रेष्ठः इति मत्वा तस्य स्तुतिं कृतवन्तः । अत्र प्रजापतिना स्वशिष्यरूपप्राणानां व्यवहारपरिष्कारार्थम् आत्मनिरीक्षणविधिः संप्रयुक्तः इति तु निश्चप्रचम् । तथैव बृहदारण्यकोपनिषदः पञ्चमाध्याये द्वितीयब्राह्मणे अपि " त्रयः प्राजापत्याः प्रजापतौ पितरि ब्रह्मचर्यमूषुर्देवा मनुष्या असुरा उषित्वा ब्रह्मचर्यं देवा ऊचुर्ब्रवीतु नो भवानिति तेभ्यो हैतदक्षरमुवाच द

इति व्यज्ञासिष्टा इति व्यज्ञासिष्मेति होचुः"(बृहदारण्यकोपनिषत् ५-२-१) इत्यत्र अयं विधिः दृश्यते । अस्यार्थः प्रजापतिना 'द' इत्येकाक्षरोपदेशे सति स्वस्य स्वस्य च स्वभावानुगुणं देवासुरमनुष्याः अवगतवन्तः इति । अत्र उक्तविधिः स्पष्टतया दृश्यते । अनेन इदमपि सिध्यति यत् आत्मनिरीक्षणविधेः उपयोगं प्राचीनकाले एव ऋषयः कुर्वन्ति स्म इति । अस्य विधेः साहाय्येन बालानां प्रौढानां च मानसिकदशायाः अध्ययनं कर्तुं शक्नुमः । एनं विधिं छात्राध्यापकौ यदा कदापि प्रयोक्तुं शक्नुतः ।

- **बाह्यनिरीक्षणविधिः(Retrospection Method)**

छान्दोग्योपनिषदि चतुर्थाध्याये चतुर्थखण्डे च श्रूयमाणः सत्यकामवृत्तान्तः बाह्यनिरीक्षणविधेः उत्तमः दृष्टान्तः भवितुमर्हति । बहुभ्यः वर्षेभ्यः परं गुरुकुलं प्रविशन्तं ज्ञानसंपन्नं शिष्योत्तमं दृष्ट्वैव गुरुर्गौतमः कथयति यत् "ब्रह्मविदिव भासि मे"(छान्दोग्योपनिषत् ४-९-२) इति । केवलं सत्यकामस्य मुखनिरीक्षणमात्रेण अर्थात् बाह्यस्वरूपनिरीक्षणमात्रेणैव गौतमेन इदमवगतं यत् एषः अधुना ज्ञानी संवृत्तः इति ।

छान्दोग्योपनिषदि षष्ठे अध्याये गुरुकुलात् प्रतिनिवृत्तम् अनूचानमानिनं स्तब्धम् अप्रणतस्वभावं च श्वेतुकेतुं स्वपुत्रं दृष्ट्वा तस्य स्वभावपरिवर्तनाय बाह्यनिरीक्षणविधेः उपयोगं करोति पिता उद्दालकः । अनेन विधिना बालानां व्यवहाराणां चेष्टायाश्च निरीक्षणेन तेषां योग्यताभिरुचिरित्यादीनां विषये स्पष्टं ज्ञानं प्राप्तुं शक्नुमः ।

- **प्रयोगात्मकविधिः (Experimental Method)**

छान्दोग्योपनिषदः षष्ठाध्यायस्य द्वादश-त्रयोदशखण्डयोः न्यग्रोधलवणदृष्टान्तौ प्रयोगविधेः प्रमाणभूतौ दृश्येते । अत्र उपरि-मध्य-अन्तात् लवणयुक्तजलस्य आचमनं कारयित्वा उदके विलीनं लवणं प्रयोगपुरस्सरं प्रदर्शयति उद्दालकः । तथैव सः न्यग्रोधफलस्य छेदनपुरस्सरं प्रयोगविधिना बोधयति । तथैव अन्यत्र छान्दोग्योपनिषदि षष्ठाध्याये "अन्नमयं हि सोम्य मनः आपोमयः प्राणस्तोजोमयी वागिति"(छान्दोग्योपनिषत्- ६-७-५) स्वपुत्रं श्वेतुकेतुं प्रति अन्नमयं मनः इति प्रयोगविधिपुरस्सरम् उपदिशति उद्दालकारुणिः। पञ्चदशदिनपर्यन्तं भोजनम् अकृत्वा तदनन्तरं मां पश्य इति श्वेतकेतोः कृते अवदत् उद्दालकारुणिः । तथैव कृत्वा आगतं पुत्रम् ऋग्वेदादिकं पृच्छति । श्वेतुकेतोः पञ्चदशदिनभोजनाभावात् तस्य मनसः पञ्चदशकलाः नष्टाः आसन् । तस्मात् सः ऋग्वेदादिकं वक्तुम्

असमर्थः भवति। पुनः पित्राज्ञया भोजनं कृत्वा पूर्ववदेव वेदं स्मरति। अनेन प्रयोगविधिना इदमवगम्यते मनः अन्नमयमिति।

प्रयोगविधिना पाठ्यते चेत् छात्राः स्पष्टमुत्तरं प्राप्तुं शक्नुवन्ति । आधुनिकशिक्षामनोविज्ञाने अधिकाधिकरूपेण प्रयोगविधेः उपयोगं कुर्वन्ति । अर्थात् प्रयोगविधिः कार्यकारणसम्बन्धं बोधयति । कार्यकारणभावसम्बन्धेन वस्तुनः अन्वेषणक्रमः शास्त्रेऽपि दृश्यते । एतादृशविधेः प्रयोगेण अध्ययनेन आन्तरिकस्पष्टता समायाति।

- **साक्षात्कारविधिः (Interview Method)**

छान्दोग्योपनिषदि पञ्चमाध्याये प्रवाहणजैविलिः श्वेतकेतोः साक्षात्कारं कृत्वैव पञ्चाग्निविद्यां ददाति। कठोपनिषदि यमः नचिकेतसः प्रलोभनादिना साक्षात्कारं कृत्वा विद्यां ददाति । एवम् अनेन विधिना बालानाम् अभिरुचीनां, योग्यतानां, मनोवृत्तीनाञ्च साक्षात् अध्ययनं कर्तुं शक्यते।

- **प्रश्नावलीविधिः (Questionnaire Method )**

“केनेषितं प्रेषितं मनः” इत्यादिना केनोपनिषदः आरम्भः एव प्रश्नद्वारा वर्तते। अस्मिन्विधौ उपनिषदः उदाहरणानि बहूनि लभ्यन्ते। अर्थात् अयं विधिः उपनिषत्सु सुप्रसिद्धः आसीत् इत्यवगम्यते। अयं विधिः छात्राणां क्षमतायाः अध्ययने अत्यन्तमुपकरोति तथैव आधुनिककालेऽपि प्रसिद्धश्च वर्तते।

- **जीवनवृत्तविधिः (Case History Method)**

कठोपनिषदि प्रथमाध्याये प्रथमवल्ल्यां श्रूयमाणः यमनचिकेतसोः संवादः व्यक्तिवृत्ताध्ययनविधेः उपचारात्मकविधेश्च अत्यन्तं सुन्दरम् उदाहरणं वर्तते । अत्र यमराजः प्रयोजकः, प्रयोज्यः नचिकेताः । नचिकेतसः ब्रह्मज्ञानप्राप्तिः उपचारः। प्रलोभनादिना परीक्ष्य स्थिरमनसः नचिकेतसः संपूर्णं व्यक्तिवृत्ताध्ययनं (Case Study) कृत्वैव ब्रह्मविद्याम् (उपचारः) उपदिशति । अयं विधिः छात्राणां स्वभावाध्ययनाय अत्यन्तमुपकरोति।

- **संवादविधिः**

कठोपनिषदि- यमनचिकेतसोः, केनोपनिषदि –इन्द्रहैमवत्योः, छान्दोग्योपनिषदि – उद्दालक-श्वेतकेत्वोः, बृहदारण्यकोपनिषदि – जनक-याज्ञवल्क्ययोः इत्येवम् अस्य विधेः उपयोगः बहुत्र दृश्यते। वादे वादे जायते तत्त्वबोधः इत्युक्तरीत्या अयं विधिः सरलः, छात्रप्रियश्च भवति।

कक्षायां प्रभावपूर्णाधिगमः प्रभावशाली प्रेरणया एव भवतीति फ्रेन्डसन महोदयस्याभिप्रायः ।

अभिप्रेरणारूपपद्धतिः उपनिषच्छिक्षायामपि दृश्यते। यथा-

पुरस्कारः एवं दण्डदानं – नचिकेतसोः कृते यमेन अतिरिक्तवरदानं पुरस्कारः। गार्ग्याः अतिप्रश्नवेलायां "मातिप्राक्षीः" इत्यादिना अन्यथा तव शिरः पततीति कथनं दण्डदानम्।

प्रशंसा एवं निन्दा – नचिकेतसः प्रशंसा, रैक्वस्य निन्दा।

प्रगतेः ज्ञानं – सत्यकामः गोः पालनं कृत्वा आगते सति, गुरुः अयं विद्यासम्पन्नः इति प्रगतेः ज्ञानं पश्यति।

आकाङ्क्षायाः स्तरः – यमः नचिकेतसः प्रलोभनादिना आकाङ्क्षायाः स्तरं पश्यति।

नवीनता – छान्दोग्योपनिषदि एकविज्ञानेन सर्वविज्ञानम्।

रुचिः – स्तुतिः, अर्थवादवाक्यम्।

यदि उपनिषत्सु गवेषणं कुर्मः तर्हि इतोऽपि उत्तमोत्तमान् शिक्षामनोविज्ञानस्य विधीन् वयं प्राप्नुमः। तस्मात् व्यक्तित्वविकासाय उपनिषद्-मनोविज्ञानस्य आवश्यकता अस्त्येव।

**शिक्षणाधिगमयोः शास्त्रेषु वर्णितमनोवैज्ञानिकाभिगमाः -**

न्यायशास्त्रटीकायां "त्रिविधा चास्य शास्त्रस्य प्रवृत्तिरुद्देशो लक्षणं परीक्षा चेति" उद्देशः- तत्र नामधेयेन पदार्थस्याभिधानम्। लक्षणम् – तत्र उद्दिष्टस्य तत्त्वव्यवच्छेदको धर्मः। परीक्षा-लक्षितस्य यथालक्षणमुपपद्यते न वेति प्रमाणैरवधारणम्। इयं न्यायशास्त्रस्य पद्धतिः लौकिकशिक्षणे अपि अनुकरणीया वर्तते। तथैव "प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छल-जातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः" न्यायसूत्रे आदौ प्रमाणनिरूपणं, ततः परं प्रमेयादीनाम् अवगमनम् इति या पद्धतिः सा निश्चयेन अद्यतनशिक्षणे उपादेया वर्तते। अस्मिन् सूत्रोक्तवादजल्पवितण्डादिकलाः वादविवादादिस्पर्धायां विजयप्राप्तये छात्राणां कृते अवश्यमपेक्षिताः। निग्रहस्थानस्य चिन्तनं छात्रः करोति चेत् चर्चास्पर्धायाम् अवश्यं विजयं प्राप्नोति।

व्याकराणादिशास्त्रेषु उक्ता सूत्र-वार्तिक-भाष्य-वृत्तिः-टीकादिपद्धतिः सरलात् कठिनं प्रति इति सिद्धान्तं प्रतिपादयति। "विशयो विषयश्चैव पूर्वपक्षस्तथोत्तरम्। सङ्गतिश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम्॥" इति वेदान्तशास्त्रस्य अधिकरणपद्धतिः अद्यतनशिक्षणे विषयस्य निरूपणे अत्यन्तमुपकरोति। वेदान्तस्य अध्यारोपापवादन्यायः छात्राणां भ्रमज्ञाननिवृत्तये भवति। दुःखाविष्टम् अर्जुनम् उद्दिश्य मनुष्यजातौ प्रथममनोवैज्ञानिकः भगवान् श्रीकृष्णः त्रयोदशोध्याये ज्ञानस्य साधनानि आह यथा -

**इन्द्रियार्थेषु वैराग्यमनहंकार एव च ।**

**जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥**

**असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।**

**नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥**

**मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।**

**विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥**

**अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।**

**एतद् ज्ञानमिति प्रोक्तमज्ञानं यदतोन्यथा ॥**

श्रीमद्भगवद्गीता १३-७,११ इति ।

श्रीमद्भगवद्गीतायां यानि ज्ञानसाधनानि प्रोक्तानि तानि आत्मज्ञानार्थं, लौकिकविद्याप्राप्त्यर्थमपि च भवन्ति । मानित्वम्- आत्मनः श्लाघनं, तदभावः अमानित्वम् । स्वधर्मप्रकटीकरणं, तदभावः अदम्भित्वम् । हिंसनम्- प्राणिनां पीडनं, तदभावः अहिंसनम् । क्षान्तिः- स्वस्मिन् परापराधप्राप्तावपि अविक्रिया । आर्जवम्- अवक्रत्वम् । आचार्योपासनम् – आचार्यस्य शुश्रूषादिभिः सेवनम् । शौचं -कायमलानां मृज्जलाभ्यां प्रक्षालनम्, मनसः रागादिमलानां प्रतिपक्षभावनया अपनयनम् वा । स्थैर्यम् – कृतनिश्चयत्वम् । इमे गुणाः यदि छात्रेषु भवन्ति तर्हि छात्राः योग्याः विद्यासम्पन्नाश्च भवन्ति । अस्माकं मनसः वृद्धिः अन्नेन भवतीत्यतः अस्माभिः ज्ञानप्राप्त्यर्थं सात्विकाहारः स्वीकर्तव्यः । तदुक्तं गीतायाम् -

**सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः।**

**निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥**

श्रीमद्भगवद्गीता १४-५ ।

**आयुः सत्त्वबलारोग्यसुखप्रीतिविवर्धनाः।**

**रस्याः स्निग्धाः स्थिराः हृद्या आहाराः सात्विकप्रियाः ॥**

श्रीमद्भगवद्गीता १७ -८ इति ।

अस्यार्थः रस्याः-आस्वाद्या मधुरप्रधानाः, स्निग्धाः- स्नेहयुक्ताः, स्थिराः-रसाद्यंशेन देहे चिरकालस्थायिनः, हृद्याः – हृदयंगमाः, दुर्गन्धादिशून्याः, आहाराः सात्विकप्रियाः इति । एतादृशसात्विकाहारं छात्राः स्वीकुर्वन्ति चेत् तेषां स्वस्थं मनः सिध्यति । स्वस्थमनसा उत्तमव्यवहारः छात्राणां स्यात् । तदुक्तं गीतायाम् -

**तदुक्तं युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।**
**युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥**

श्रीमद्भगवद्गीता ६-१७ ।

“आहारशुद्धौ सत्वशुद्धिः, सत्वशुद्धौ ध्रुवा स्मृतिः” इत्येवं सूक्ष्मदृष्ट्या वयं पश्यामः चेत् शिक्षणाधिगमयोः शास्त्रेषु उपनिषत्सु च मनोवैज्ञानिकाभिगमाः बहवः उपलभ्यन्ते ।

**********

**परिशीलितग्रन्थाः-**


1. शिक्षामनोविज्ञानम् – पि.डि.पाठक् ।
2. ईशादि नौ उपनिषत् – गोरखपुर प्रेस ।
3. भगवद्गीता – गोरखपुर प्रेस ।
4. अर्थसंग्रहः – चौखम्बा प्रकाशनम् ।
5. शैक्षणिकमनोविज्ञानम् – श्री ओबलेशगट्टी ।
6. उपनिषत् सन्देश – रामकृष्णाश्रम प्रकाशनम् ।
7. उपनिषद रहस्य – विजयकुमारगोविन्दराम हासानन्द दिल्ली ।
8. उपनिषदों का संदेश – डा. राधाकृष्ण, राजपालप्रकाशन, दिल्ली ।
9. न्यायसूत्रम् – चौखम्बा प्रकाशन
10. वेदान्तपरिभाषा- संपूर्णानन्दसंस्कृतविश्वविद्यालय वाराणसी

# भारते अध्यापकशिक्षा

✍ डॉ. महेशकुमारपाणिग्राही *

**अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ।**
**आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः॥**

**नास्ति विद्या समं चक्षुः** (व्यासः) इति श्रुतिवचनं पाथेयीकृत्य जनाः आजीवनं विद्यार्जयितुमवसरं कल्पयन्ति । अत एव ''शिक्षा नाम आजीवनप्रचाल्यमाना काचित् गतिशीला प्रक्रिया''- इति शिक्षायाः व्यापकार्थस्वीकरणे नास्ति काचित् विप्रत्तिपत्तिः । शिक्षा किमर्थम् इति पृच्छामश्चेत् शिक्षाविदः उत्तरयन्ति - ''मनुष्यः सामाजिकप्राणी । सामाजिकपुनारचनाय शिक्षायाः आवश्यकता अपरिहार्या ।'' यादृशः समाजः तादृशी शिक्षा, यादृशी शिक्षा तादृशश्च समाजः- इति वाक्यं शिक्षा समाजस्य निर्माणं करोतीति विषयेऽपि ज्ञापयति । शिक्षायाः कार्यं मानवजीवननिर्माणं राष्ट्रनिर्माणञ्च ।

शिक्षा त्रिध्रुवीयप्रक्रिया इति जॉन डीवी महोदयस्य आशयः । तत्राध्यापकः, छात्रः, समाजः (पाठ्यवस्तु) चान्तर्भवन्ति । एतेषां मध्ये अध्यापकस्य भूमिका सर्वाधिकगुरुत्वपूर्णा । शिक्षां प्रदातुं अध्यापकस्यावश्यकता अपरिहार्या । कारणं छात्राः मृत्पिण्डवत् भवन्ति । यथा कुम्भकारः मृत्पिण्डतः सुन्दरं घटं निर्माय आपणे विक्रयति, तथैव अध्यापकः स्वस्य ज्ञान-चरित्र-प्रभावानुसारेण छात्रान् प्रभावीकृत्य सर्वोत्तमनागरिकरूपेण निर्माय समाजरूपकापणं प्रति प्रेषयति ।

सुयोग्येनाध्यापकेन एव सुयोग्यनागरिकाः निर्मातुं शक्यन्ते, नान्यत् । सुयोग्याध्यापकाभावे छात्राः विशृङ्खलिताः भवन्ति । उपयुक्तसमाजोपयोगीपाठ्यवस्तु सत्त्वेऽपि योग्याध्यापकाभावात् कदाचित् छात्राणामनुकुलशिक्षणाभावात् समाजः ध्वंसाभिमुखी स्यात् । अतः सुयोग्याध्यापकानामावश्यकता शिक्षाक्षेत्रे भूरीशः प्रतीयते । अध्यापक एव शिक्षणप्रक्रियां संजीवयति । समाजे एतदर्थमेव अध्यापकस्य स्थानं सर्वोपरि वर्त्तते ।

सुयोग्याध्यापकस्य लक्षणविषये कालिदासेन मालविकाग्निमित्रे समुच्चरितं यत्-

**श्लिष्टा क्रिया कस्यचिदात्मसंस्था**
**संक्रान्तिरन्यस्य विशेषयुक्ता ।**
**यस्योभयं साधु स शिक्षकाणां**
**धुरि प्रतिष्ठापयितव्य एव ॥** (मा.वि.मि - १/१६)

* संविदाध्यापकः, शिक्षाशास्त्रविभागः, गुरुवायूर् परिसरः, केरलम्

अध्यापकस्य गुरुत्वं स्पष्टयितुं विद्वज्जनाः स्वाभिमतं प्रकटयन्ति। तद्यथा-

**क) डॉ. सर्वपल्लीराधाकृष्णन् -**

"समाजे अध्यापकस्य स्थानमत्यन्तमहत्त्वपूर्णं वर्तते । स एकसमसामयिकसमाजात् अग्रिमसमसामयिकसमाजं प्रति बौद्धिकपरम्पराणां प्राविधिककौशलानाञ्च हस्तान्तरस्य साधनरूपे कार्यं करोति। एतेन सह सभ्यतायाः ज्योतिं प्रज्वलयितुं सहायतां प्रददाति।

ख) **माध्यमिकशिक्षायोगः (१९५२-५३)** –

शैक्षिकपुनर्निर्माणे अध्यापकस्य गुणावली, व्यावसायिकप्रशिक्षणं, प्रदत्तं समाजस्य विद्यालयस्य च स्थानं सर्वाधिकमहत्त्वपूर्णमिति माध्यमिकशिक्षायोगः प्रतिपादयति।

**(ग) कोठरी-आयोगः** (१९६४-६६)

राष्ट्रियविकासं प्रभावयितुं शिक्षायाः योगदानं यदस्ति, तत्राध्यापकस्य गुण-क्षमता-चरित्रादीनि सर्वाधिकमहत्त्वपूर्णानि साधनान्युपकुर्वन्ति।

परन्तु मनसि शङ्का जायते यत् जनसंख्यायाः विस्फोटसमये सुगुणयुक्ताः सुयोग्याः अध्यापकाः कुतः आगमिष्यन्ति ? यद्यपि प्राचीनाः वदन्ति शिक्षणं एका कला । तर्हि येषां पार्श्वे सा कला वर्तते, ते एवोत्तमाध्यपकाः भविष्यन्ति, नान्यत् । परन्तु समाजे एतादृशानां संख्या न्यूना । उत्तमशिक्षकाभावे समाजस्याग्रगतिरपि भवितुं नार्हति। तर्हि शिक्षणकार्यं कथं वा सुचारुरूपेण चालयितुं शक्यते ?

एतस्याः समस्यायाः समाधानार्थं शिक्षाविदः शिक्षकप्रशिक्षणस्य विषये चिन्तितवन्तः । प्रशिक्षणमाध्यमेन सुयोग्याध्यापकानां निर्माणं कर्तुं शक्यते । इत्थं विचिन्त्य **"अध्यापकशिक्षा"** पाठ्यक्रमस्य प्रारम्भाभवत्।

**अध्यापकशिक्षायाः ऐतिहासिकविवरणम्** -(शिक्षायाः कालभेदेन)

वैदिकशिक्षायाः प्रारम्भ इत्युक्ते विश्वशिक्षायाः प्रारम्भ इति सर्वजनाशयः । अत एव वैदिककालादारभ्य अध्यापकशिक्षायाः संरचनाव्यवस्था कथमासीदिति सिंहावलोकनेन जानीमः।

**वैदिककालः** –

६०० ख्रीष्टपूर्वात् प्रागयं काल इति ऐतिहासिकाः प्रमाणयन्ति । अस्मिन् काले अध्यापनकार्यमाध्यात्मिककार्यमिति आमनन्ति जनाः । गुरु-आचार्य-उपाचार्यादिनामभिः अध्यापकः प्रसिद्धः आसीत् । अध्यापकः सर्वेषामादर्शाणां जनकः । परन्तु तस्मिन् काले अध्यापकानां

प्रशिक्षणव्यवस्था नासीत् । न वा प्रमाणपत्रस्य । उत्तमाध्यापकस्य पार्श्वे स्थित्वा अध्यापनकलां गृह्णाति शिष्यः । परवर्ति समये सः अध्यापकरूपेण कार्यं सम्पादयति स्म । परन्तु वैदिकशिक्षायाः अन्तिमपर्याये अध्यापनं पैतृककार्यमभवत् । ब्राह्मणः एव तस्याधिकारी । एवं कालक्रमेण अध्यापनं ब्राह्मणानां पैतृकसम्पत्तिरिति आमनत् ।

**बौद्धकालः** –

६०० ख्रीष्टपूर्वात् १२०० ख्रीष्टाब्दपर्यन्तं कालः बौद्धशिक्षायाः कालः । बौद्धशिक्षायाः व्यवस्था वैदिकशिक्षावदासीत् । सामान्यावलोकनेन पार्थक्यं केवलं धर्मस्य इति ज्ञातुं शक्यते । अन्यत् सर्वं नामान्तरमात्रम् । अतः बौद्धकालेऽपि वैदिककालवत् अध्यापकानां कृते पृथक् प्रशिक्षणव्यवस्था नासीत् । परन्तु जातिप्रथायाः उच्छेदकारणात् ब्राह्मणातिरिक्तजनः अपि अध्यापकरूपेण कार्यं समपादयत् । बौद्धभिक्षुः एवाध्यापकरूपेण कार्यमकोरत् ।

**मध्यकालः**(मुस्लिमशिक्षा)**-**

१२०० ख्रीष्टाब्दात् १८०० ख्रीष्टाब्दपर्यन्तं कालः शिक्षायाः मध्यकालः । मध्यकाले मुस्लिमजनानां शासनमासीत् । अतः शिक्षायाः मध्यकाल इत्युक्ते मुस्लिमशिक्षायाः कालः । अस्मिन् काले "मौलवी" (अध्यापकस्य नाम) अपाठयत् । यदि सम्यगवलोकयामः तर्हि स्पष्टीयते यत् तस्मिन् कालेऽपि अध्यापकानां कृते विशेषप्रशिक्षणव्यवस्था नासीत् । धनं स्वीकृत्य मौलवी मदरसासु मकतबेषु च पाठयति स्म ।

**ब्रिटिशकालः-**

१८०० ख्रीष्टाब्दात् १९४७ ख्रीष्टाब्दपर्यन्तमयं कालः । आङ्गलजनानामागमनादनन्तरं ब्रिटिशशिक्षायाः समुद्भवः अभवत् । अस्मिन् काले शिक्षाव्यवस्था पूर्णरूपेण परिवर्तिताभवत् । आङ्ग्लेयानां प्रभावात् भारते शिक्षणशैल्यां क्रान्तिरागता । पाश्चात्यविषयाणामध्यापनं, पाश्चात्यभाषयाध्यापनं, पाश्चात्यशैल्याश्चाध्यापनं भारतीयानां कृते कष्टकरमभवत् । यद्यपि केचन पाठयन्तः आसन्, तत्रापि जनसंख्यायाः वृद्धिकारणात् अध्यापकानां न्यूनता अनुभूता । प्रशिक्षणेन योग्याध्यापकानां निर्माणं कर्त्तुं शक्यते इति विचिन्त्य अस्मिन् काले एव **अध्यापकशिक्षायाः** प्रारम्भं कृतवन्तः । अस्मात् कालादेवभारते अध्यापनकार्यं वृत्तिरूपेण विकसितमभवत् ।

१८१९ तमे संवत्सरे कलकताविद्यालयसमाजेन (Calcutta school society) सर्वप्रथमे

अध्यापकप्रशिक्षणकार्यं प्रारब्धम् । तदनन्तरं १९२४ तमे संवत्सरे देशीयविद्यालयसमाजेन (Native school society), मद्रासशिक्षासमाजेन (Madras Education society) च प्राथमिकशिक्षकाणां कृते प्रशिक्षणकेन्द्रं स्थापितम् । एवं प्रकारेण क्रमशः प्रशिक्षणकेन्द्राणां स्थापना बहुषु स्थानेषु अभवत् । वुडघोषणापत्राधारेण (१८५४) भारतस्य प्रत्येकस्मिन् प्रान्ते इंग्लेण्डसदृशं प्रशिक्षणविद्यालयानां स्थापना अभवत् ।

१८८२ पर्यन्तं भारते आहत्य १०६ प्राथमिकाध्यापकप्रशिक्षणकेन्द्राणि आसन् । मद्रास्-लाहोरस्थानयोः माध्यमिकाध्यापकानां द्वे प्रशिक्षणकेन्द्रे आस्ताम् । परन्तु विंशशताब्द्याः प्रारम्भे प्रशिक्षणसंस्थानां संख्या आशातीतरूपेण वृद्धिः जाता । १९३६ तमे संबत्सरे मुम्बईविश्वविद्यालयेन M.Ed पाठ्यक्रमस्य प्रारम्भः कृतः । १९४७ तमे संवत्सरे अध्यापकप्रशिक्षणाय देहल्यां केन्द्रीयशिक्षासंस्थानस्य (Central Institute of Education-CIE) स्थापना अभवत् । स्वतन्त्रताप्राप्तेः प्राक् अर्थात् ब्रिटिशशिक्षाकाले भारते अध्यापकप्रशिक्षणसंस्थायाः भेदत्रयमासीत् । यथा-

१. **दीक्षाविद्यालयः** - माध्यमिकयोग्यताधारिणां कृते द्विवर्षात्मकप्रशिक्षणकार्यक्रमः ।

२. **माध्यमिकप्रशिक्षणविद्यालयः -** उच्चमाध्यमिकयोग्यताधारिणां कृते एकवर्षात्मकः द्विवर्षात्मकः वा पाठ्यक्रमः ।

३. **प्रशिक्षणमहाविद्यालयः** - स्नातकयोग्यताधारिणां कृते एकवर्षात्मकपाठ्यक्रमः ।

**स्वतन्त्रोत्तरकालः**-

१९४७ ख्रिष्टाब्दादयं कालः क्रमशः अग्रेसरति । माध्यमिकशिक्षायोगेन(१९५२-५३) माध्यमिककक्षोतीर्णयोग्यताधारिणां कृते द्विवर्षात्मकपाठ्यक्रमव्यवस्था, स्नातकानां कृते एकवर्षात्मकपाठ्यक्रमव्यवस्था च भवेदिति उक्तम् । प्रशिक्षणस्य समुन्नतये १९६१ तमे संबत्सरे राष्ट्रियशैक्षिकानुसन्धानप्रशिक्षणपरिषदः (NCERT) निर्माणं अभवत् । एषा संस्था प्रशिक्षणार्थं कार्यं कृतवती । विशेषतः सेवारतानां प्रशिक्षणार्थं संगोष्ठी(Seminar)-कार्यशाला(Workshop)-आदीनामायोजनमकरोत् । १९६३-६४ तमे संबत्सरे प्रशिक्षणं प्रदातुं विभिन्नेषु राज्येषु "राज्यशिक्षासंस्थानम्" (State Institute of Education) इत्यस्य स्थापना अभवत् । एतत् संस्थानं सेवारताध्यापकानां प्रशिक्षणव्यवस्थां कृतवान् । कोठरी-आयोगेनाऽपि (१९६४-६६) सेवारताध्यापकानां कृते पुनश्चर्यापाठ्यक्रमस्य (Refresher Courses ) आयोजनं भवत्विति संसूचितम् ।

भारतसर्वकारेण १९८२ तमे संबत्सरे अध्यापकदिवसे (सितम्बरमासस्य पञ्चमदिनाङ्के) अध्यापकानां भूमिका-उद्देश्य-प्रशिक्षण-आचारसंहितादिषु विषयेषु ज्ञापनार्थं परामर्शप्रदानार्थञ्च अध्यापकानां कृते **'राष्ट्रियायोगः प्रथम-द्वितीयश्च'** (National Commissions on Teachers 1st & 2nd) -इत्यस्य आयोजनं कृतम् । राष्ट्रियनवशिक्षानीतिः(१९८६) प्रत्येकं मण्डले मण्डलशिक्षाप्रशिक्षणसंस्थानस्य (DIET) संस्थापनार्थं सूचितवती । २००४ ख्रीष्टाब्दस्य गणनानुसारेण भारते ५९९ मण्डलेभ्यः ४९८ मण्डलेषु DIET इत्यस्य स्थापना अभवत् ।

विश्वविद्यालयानुदानायोगस्य (University Grant Commission-UGC) आर्थिकसहायतायामष्टचत्वारिंशत् (४८) विश्वविद्यालयेषु एकेडेमिकस्टाफकॉलेज (Academic Staff College-ASC) इत्यस्य स्थापना अभवत् । तत्र महाविद्यालयेषु विश्वविद्यालयेषु वा नवनियुक्ताध्यापकानां कृते अभिविन्यासपाठ्यक्रमस्य (Orientation Course), वरिष्ठाध्यापकानां कृते पुनश्चर्यापाठ्यक्रमस्य (Refresher Course) च आयोजनं क्रियते ।

अध्यापकशिक्षोपरि विशेषावधानं दातुं १९९३ तमे संबत्सरे स्वीकृताधिनियमानुसारेण राष्ट्रियशिक्षकशिक्षापरिषदः (NCTE) स्थापना अभवत् । आदौ एषा संस्था NCERT मध्ये पृथक् विभागरूपेणासीत् । परन्तु १९९५ संबत्सरात् एषा संस्था स्वायतरूपेण कार्यं कृतवती ।

**भारते पत्राचारमाध्यमेनाध्यापकशिक्षा -**

पत्राचारमाध्यमेन प्रशिक्षणपाठ्यक्रमस्य प्रारम्भः सर्वारम्भे १९६६ तमे संवत्सरे दिल्लीविश्वविद्यालयस्य केन्द्रियशिक्षासंस्थानेन (Central Institute of Education-CIE) कृतः । १९७० तमे संवत्सरे क्षेत्रीयशिक्षासंस्थानं पत्राचारमाध्यमेन शिक्षां प्राददात् । सम्प्रति बहुभिः विश्वविद्यालयैः पत्राचारमाध्यमेन अध्यापकशिक्षा प्रदीयते ।

एवं कालक्रमेणाध्यापकशिक्षायाः क्रमविकासोऽभवदिति अवलोकितम् । अधुना उद्देश्य - स्तरभेद - समस्यादिविषयेषु क्रमेण विचार्यते ।

**अध्यापकप्रशिक्षणस्य उद्देश्यम् -**

स्वभावपूर्णकलाधारितोत्तमाध्यापकानां जन्म तु स्वल्पम्(विरलम्) । परन्तु प्रशिक्षणेनावश्यकतानुरूपमुत्तमाध्यापकाः निर्मातुं शक्यन्ते । अत एव प्रशिक्षणव्यवस्था कल्पिता । अध्यापकानां प्रशिक्षणं तावत् गुरुत्वपूर्णं यावत् चिकित्सकस्य कृते प्रशिक्षणं गुरुत्वपूर्णम् । प्रसङ्गेऽस्मिन्

केषाञ्चन विदुषामभिप्रायो वर्तते यत्- यदि एकः चिकित्सकः अप्रशिक्षितः(मूर्खः), तर्हि एकस्यैव रोगिणः मृत्युः भवति। तदनन्तरं तस्य पार्श्वे कोऽपि नायाति। परन्तु यदि एकः अध्यापकः अप्रशिक्षितः(मूर्खः), तर्हि क्रमशः समाज एव नश्यति। अतः समाजस्य विकासाय उत्तमाध्यापकानां निर्माणाय चाधोलिखितान् उद्देश्यान् आधारीकृत्य प्रशिक्षणं प्रदीयते। तानि उद्देश्यानि यथा -

क. अध्यापनाय आत्मविश्वासजननम्।

ख. विषयं सरलं, सरसं, सुग्राह्यं, बोधगम्यं च कर्त्तुम्।

ग. शिक्षायाः दार्शनिक-समाजशास्त्रीय-मनोवैज्ञानिकादिविषयेषु ज्ञापनार्थम्।

घ. शिक्षणतन्त्राणां (Technic) ज्ञापनार्थम्।

ङ. अधिगममनोविज्ञानस्य ज्ञापनार्थम्।

च. शैक्षिकमापन-मूल्याङ्कनादिविभिन्नविधिज्ञापनार्थम्।

छ. निर्देशन-परामर्शक्षमतायाः अभिवृद्धिनिमित्तम्।

ज. पाठ्यसहगामी क्रियाणामायोजनयोग्यता निर्माणार्थम्।

झ. विद्यालयीयकक्षाप्रबन्धादिविभिन्नसिद्धान्तानां ज्ञानप्रदानार्थम्।

ञ. शिक्षाक्षेत्रे प्रवृत्तनवीनप्रविधीनां ज्ञानप्रदानार्थम्।

ट. शिक्षासमस्योपरि विचारविमर्शनार्थम्।

**अध्यापकप्रशिक्षणस्य स्तराः -**

शिक्षायाः स्तरभेदानुसारेण प्रशिक्षणस्य स्तरभेदोऽपि वर्तते। यथा -

१. पूर्वप्राथमिकस्तरीयाध्यापकानां कृते प्रशिक्षणम्।

२. प्राथमिकस्तरीयाध्यापकानां कृते प्रशिक्षणम्।

३. माध्यमिकस्तरीयाध्यापकानां कृते प्रशिक्षणम्।

४. उच्चस्तरीयाध्यापकानां कृते प्रशिक्षणम्।

५. स्नातकोत्तरच्छात्राणां कृते प्रशिक्षणमनुसन्धानञ्च।

एतत् विहाय विशेषविषयार्थमपि अध्यापकानां कृते प्रशिक्षणं दीयते। यथा-

६. क्षेत्रीयशिक्षासंस्थानम्।

७. विशेषविषयप्रशिक्षणम्।

एतेषां विषये ज्ञानार्थं विवरणमधो प्रस्तूयते।

**१. पूर्वप्राथमिकस्तरीयाध्यापकानां कृते प्रशिक्षणम् -**

पूर्वप्राथमिकस्तरीयाध्यापकानां कृते प्रशिक्षणार्थमस्माकं देशे सर्वकारीयव्यवस्था नास्ति । स्वयंशासितसंस्थाद्वारा प्रशिक्षणं दीयते। अत्र मुख्यतः नर्सरी/शिशुमन्दिराध्यापकानां कृते प्रशिक्षणं प्रदीयते। प्रायशः अधिकाधिकाः नार्य एव प्रशिक्षणार्थमागच्छन्ति । शिशूनां लालनपालनं, व्यवहारज्ञानं, सैद्धान्तिकज्ञानं (शिक्षासम्बन्धितम्) च प्रशिक्षणमाध्यमेन शिक्षते। अधुना भारते आङ्गनवाडी-शिक्षिकाणां कृते सर्वकारेण मध्ये मध्ये प्रशिक्षणव्यवस्था क्रियते। परन्तु औपचारिकप्रशिक्षणविद्यालयः नास्ति।

**२. प्राथमिकस्तरीयाध्यापकानां कृते प्रशिक्षणम् -**

माध्यमिकः, उच्चमाध्यमिकः, तत्समकक्षो वा योग्यताप्राप्तः छात्रः अस्मिन् स्तरे प्रशिक्षणार्थमागच्छति । सर्वकारीयः, असर्वकारीयः(स्वयंशासितः) चोभयविधव्यवस्था वर्तते । एकवर्षात्मकः द्विवर्षात्मकः वा कालः वर्तते प्रशिक्षणार्थम् । पाठ्यक्रमे बालमनोविज्ञानम्, शिक्षणसिद्धान्ताः, शिक्षणविधयः, विद्यालयप्रबन्धनं, स्वास्थ्यं, समाजसेवा, शिल्पकलादिविषयाः संयोजिताः भवन्ति। प्रत्येकेषु राज्येषु पाठ्यक्रमे, प्रशिक्षणावधौ, प्रवेशार्हतायां, नाम्नि च भेदः परिलक्ष्यते। यथा - कुत्रचित् J.T.C. (Junior Training Course), B.T.C. (Basic Training Course), P.T.C. (Primary Teachers Certificate), डिप्लमा इन् टीचिङ्ग् - इत्यादिभिः नामभिः परिचितमिदं प्रशिक्षणम्।

**३. माध्यमिकस्तरीयाध्यापकानां कृते प्रशिक्षणम्-**

स्नातकोतीर्णः छात्रः एव अस्मिन् स्तरे प्रशिक्षणार्थं प्रवेष्टुं शक्नोति। सामान्यतः B.Ed नाम्ना परिचितमिदं प्रशिक्षणम् । अत्र एकवर्षात्मकावधौ प्रशिक्षणं दीयते । पाठ्यक्रमे समाजशास्त्रीयाधारः, दार्शनिकाधारः, मनोविज्ञानम्, शैक्षिकप्रविधिः, मापनमूल्याङ्कनं, विद्यालयप्रशासनम्, शिक्षणाभ्यासादिविषयाः सम्मिलिताः भवन्ति । सर्वकारीय-असर्वकारीय-पत्राचारादिमाध्यमेनेदं प्रशिक्षणं प्राप्तुं शक्यते।

**४. उच्चस्तरीयाध्यापकानां कृते प्रशिक्षणम् -**

उच्चस्तरीयाध्यापकानां कृते स्नातकोत्तरोपाधिः एव न्यूनतमयोग्यता वर्तते । ततोऽधिकोपाधिधारिणः (विद्यावारिधिः, विशिष्टाचार्यः) अपि प्रशिक्षणार्थमागच्छन्ति । पूर्वे एतेषां

उच्चस्तरीयाध्यापकानां प्रशिक्षणव्यवस्था नासीत् । अध्यापकाः स्वेच्छया नवीनज्ञानप्राप्त्यर्थं संगोष्ठी, कार्यशाला, अभिविन्यासपाठ्यक्रमः, पुनश्चर्यापाठ्यक्रमादिकार्यक्रमेषु भागग्रहणं कुर्वन्तः प्रशिक्षणज्ञानं प्राप्नुवन्ति स्म । परन्तु अधुना विश्वविद्यालयानुदानायोगेन (UGC) महाविद्यालये, विश्वविद्यालये च कार्यरताध्यापकानां कृते अभिविन्यासपाठ्यक्रमे पुनश्चर्यापाठ्यक्रमे वा भागग्रहणमनिवार्यं कृतम् । आयोगस्य मतानुसारेण नवनियुक्ताध्यापकानां कृते राष्ट्रियविकासाय शिक्षायाः भूमिका, शिक्षणकला, व्यक्तित्वविकासादिषु विषयेषु ज्ञानमावश्यकम् । वरिष्ठाध्यापकानां तात्कालिकज्ञानम् (Up to Date Knowledge) आवश्यकम् । अतः विश्वविद्यालयानुदानायोगेन (UGC) ४८ विश्वविद्यालयेषु एकाडेमिकस्टॉफकॉलेज (Academic Staff College) उन्मोचितं कृतम् । यत्र नवनियुक्ताध्यापकानां कृते अभिविन्यासपाठ्यक्रमस्य (Orientation Course) एवञ्च वरिष्ठाध्यापकानां कृते पुनश्चर्यापाठ्यक्रमस्य (Refresher Course) च व्यवस्था क्रियते । पाठ्यक्रमे राष्ट्रियविकासः, शिक्षणकला, शिक्षायाः इतिहासः, व्यक्तित्वविकासादिविषयाः भवन्ति ।

**५. स्नातकोत्तरछात्राणां प्रशिक्षणमनुसन्धानञ्च -**

स्नातकोत्तरछात्राणां कृते M.Ed पाठ्यक्रममाध्यमेन प्रशिक्षणं दीयते । अत्र न केवलं प्रशिक्षणमपितु अनुसन्धानार्थमपि प्रारम्भिकज्ञानं प्रदीयते । प्रशिक्षणार्थी शैक्षिकानुसन्धानविषये पूर्णरूपेण पठति । तस्य प्रायोगिकपक्षः अपि अत्र क्रियते । लघुशोधप्रबन्धं निर्माति प्रशिक्षणार्थी । एकवर्षात्मकावधौ प्रशिक्षणं दीयते । B.Ed स्तरे पठितानां विषयाणां विस्तृतज्ञानेन सह नूतनविषयाणां ज्ञानार्थं पाठ्यक्रमे विषयाः भवन्ति । अत्राऽपि शिक्षणाभ्यासः क्रियते ।

**६. क्षेत्रीयशिक्षासंस्थानम् (Regional Institute of Education)**

१९६३ तमे संवत्सरे NCERT द्वारा क्षेत्रीयशिक्षासंस्थानस्य स्थापना अभवत् । अधुना पञ्चमहाविद्यालयाः भूवनेश्वर-अजमेर-मैसुर-भोपाल-शिलाँगस्थानेषु वर्तन्ते । अत्राध्ययनमध्यापनञ्च परम्परागतपद्धतितः भिन्नम् । मुख्यतः प्रविधिविषययुक्ताध्यापकाः (यथा-शिल्पम्, वाणिज्यम्, विज्ञानम्, गृहविज्ञानादिविषयाः) अत्र प्रशिक्षणं प्राप्तुं शक्नुवन्ति ।

**७. विशेषविषयप्रशिक्षणम् -**

अत्र विशेषविषयाध्यापकाः प्रशिक्षणं प्राप्नुवन्ति । यथा- शारीरिकशिक्षा-संगीत-कलादिविषयाः मुख्यतः भवन्ति । हिन्दी-संस्कृतभाषयोः कृतेऽपि भिन्नप्रशिक्षणव्यवस्था आसीत् । परन्तु अधुना

सामान्यप्रशिक्षणेन सह समानप्रशिक्षणं दीयते।

**अध्यापकप्रशिक्षणे समस्या -**

साम्प्रतिकेऽस्मिन्समये प्रचलितपाठ्यक्रमे काश्चन समस्याः परिदृश्यन्ते। यैः कारणैः प्रशिक्षणं केवलं प्रमाणपत्रार्थमिति प्रतिभाति। तत्र गुणात्मकतायाः लेशमात्रं स्थानं नास्ति। उत्तमज्ञानयुक्तजनः कदाचित् नियुक्तेरभावे गृहे तिष्ठति। यः कोऽपि अर्थबलेन प्रमाणपत्रं प्राप्य शिक्षकरूपेण कार्यं सम्पादयति। एतेन उत्तमशिक्षादानाभावे छात्रसमाजः विशृङ्खलितः दिग्भ्रष्टश्च जायते। शिक्षाक्षेत्रे विशृङ्खला उत्पद्यते। अतः समस्यायाः निवारणमवश्यं करणीयम्। तासां समस्यानां सूचनाः अधो प्रस्तूयन्ते -

**1) प्रवेशसमस्या –**

शिक्षकवृतौ सम्मानं नास्ति, धनार्जनस्यापि अनुपयुक्तमिति विचिन्त्य योग्यः प्रतिभावान् छात्रः प्रवेशार्थं नागच्छति। पुनश्च प्रवेशपरीक्षायां वैधतायाः विश्वसनीयतायाश्चाभावः दृश्यते। आरक्षणं (Reservation) व्यवस्था कारणादपि अनेके योग्याः प्रवेष्टुं न शक्नुवन्ति।

**२) अनुपयुक्तपाठ्यक्रमः -**

बहुपुरातननिष्कर्षाणां सिद्धान्तानां च संयोजनं पाठ्यक्रमे क्रियते। तत्रापि अध्यापनावधौ सैद्धान्तिकविषयोपरि ध्यानं दीयते चेत् प्रायोगिकमुपेक्षितं भवति। बहुपुरातनपाश्चात्यशैलीमाधारीकृत्य पाठ्ययोजना निर्मीयते। यत्र नूतनतायाः अभावात् छात्राणां रूचिः नागच्छति। अध्यापकोऽपि वास्तविकपरिस्थितौ स्वाभिज्ञतायाः प्रयोगं कर्तुं न शक्नोति। शिक्षणाभ्याससमये प्रदर्शनात्मकविज्ञानस्य सहयोगाभावात् नकारात्मकदृष्टिकोणकारणात् च छात्राध्यापकाः केवलमौपचारिकतया पाठ्ययोजनां पूरयन्ति। अतः कक्षाप्रशासन-प्रबन्धन-मूल्याङ्कनादिविषयेषु निपुणतां (प्रवीणतां) प्राप्तुं न शक्नुवन्ति।

**३) दोषपूर्णमूल्याङ्कनप्रक्रिया -**

प्रशिक्षणसमये आन्तरिकं बाह्यञ्च मूल्याङ्कनं क्रियते। परन्तु सततमूल्याङ्कनाभावे आन्तरिकमूल्याङ्कने त्रुटिः परिलक्ष्यते। बाह्यपरीक्षणेऽपि छात्राः रटनं (अभ्यासं) कृत्वा लिखन्ति। तेन गुणात्मकाभिवृद्धिः भवितुं नार्हति।

**४) छात्राध्यापकानां नकारात्मकदृष्टिकोणः -**

प्रशिक्षणादनन्तरं नियुक्तेरभावकारणात् छात्राध्यापकाः मानसिकस्तरे चिन्तिताः भवन्ति। ये छात्राः अन्यविकल्पं न प्राप्नुवन्ति ते एव अत्र प्रवेशं स्वीकुर्वन्ति। नोचेत् पदोन्नतिनिमित्तं प्रशिक्षणार्थमागच्छन्ति। **"जीवने अहं शिक्षकैव भवामि"** इति संकल्पं मनसि धारयित्वा स्वल्पाः छात्राः प्रशिक्षणाय प्रविशन्ति। अन्ये सर्वे अन्यपन्थाभावात् अनिच्छासत्वेऽपि प्रशिक्षणं प्राप्नुवन्ति।

**५) अनुसन्धानस्याभावः -**

भारते शिक्षाक्षेत्रे अनुसन्धानस्याभावः परिलक्ष्यते। पाश्चात्यैः निर्णितानां विधीनां सिद्धान्तानाञ्चानुकरणमेतावत् पर्यन्तं क्रियते। भारतीयपरिवेशानुगुणं शिक्षाव्यवस्था कथं भवेत्, केषां

विधीनां सिद्धान्तानां वा उपयोगेन छात्राः विषयमवगन्तुं शक्नुवन्ति- इत्यस्मिन् विषये न केनाऽपि भारतीयप्राध्यापकेनानुसन्धानं, न वा नूतनतथ्यस्योन्मोचनम्, न वा सम्यक् निर्णयविषये आलोकपातं कृतम्। अतः भारते शिक्षाक्षेत्रे मौलिकानुसन्धानस्यावश्यकता नितान्तापरिहार्या इति सर्वैरनुभूयते । यस्याभावः भारते अधुनाप्यस्ति।

सम्प्रति NCTE, NCERT, UGC- इत्येतेषां मिलितप्रस्तावानुसारेणाध्यापकप्रशिक्षणक्षेत्रे महत्परिवर्तनं जातम् । गुणात्मकप्रशिक्षणं प्रदातुं B.Ed, M.Ed च पाठ्यक्रमः २०१५-१६ शिक्षावर्षात् द्विवर्षात्मकोऽभवत् । पुनः २०१९-२० शिक्षावर्षात् चतुर्वषात्मकप्रशिक्षणपाठ्यक्रमः भविष्यतीति उद्घोषणमभवत् । एतस्य प्रमुखाशयः अयं वर्तते यत् ये छात्राः अध्यापकाः भवितुमिच्छन्ति ते स्नातकात् प्राक् निर्धारयन्तु । एतेन **अन्यनियुक्तेरभावे अध्यापकवृत्तिः**-इति चिन्तनस्य परिवर्तनं भविष्यति । पुनश्च योग्याध्यापकानामभावोऽपि दूरीभविष्यति । शिक्षणक्षेत्रे गुणात्मकाभिवृद्धिमानयितुं अयं महान् प्रयासः इति विदुषामाशयः ।

दोषाणां परिहारं कृत्वा योग्याध्यापकानां निर्माणं क्रियते चेत् अस्माकं राष्ट्रः सर्वाग्रगण्यः भवितुमर्हति। अतः एतदर्थं सर्वेषां सहयोगः काम्यः।

**********

**परिशीलितग्रन्थाः-**

1) के.जी. रस्तोगी - भारतीयशिक्षा का इतिहास एवं समस्याएँ, विनोद पुस्तक मन्दिर, आगरा।

2) दिनेशचन्द्रजोशी, चतर सिंह मेहता - शिक्षकप्रशिक्षण के सिद्धान्त और समस्याएँ, राजस्थान हिन्दीग्रन्थ अकादमी, जयपुर।

3) रवीन्द्र अग्निहोत्री – आधुनिकभारतीयशिक्षा, समस्याएँ और समाधान, राजस्थान हिन्दी ग्रन्थ अकादमी, जयपुर।

4) पी.डी. पाठक - भारतीय शिक्षा और उसकी समस्याएँ - श्री विनोद पुस्तकमन्दिर, आगरा -२।

5) रामशकल पाण्डेय - भारतीय शिक्षा की समस्यायें - श्री विनोद पुस्तकमन्दिर, आगरा।

6) टीचर ऐजुकेशन करीकुलम फ्रेमवर्क- १९७८

7) शिक्षाशास्त्र(UGC-NET) , दैनिक पब्लिसिंग कम्पनी, नई दिल्ली।

8) शिक्षाशास्त्र(UGC-NET) , श्रीविनोद पुस्तक मन्दिर, आगरा।

# साम्प्रतिकशिक्षाक्रमे मूल्यसंवर्धने गैर्वाण्याः उपादेयता

✍ **डॉ. प्रभल विद्याधरः ***

विश्वजननी गीर्वाणी अत्यन्तप्राचीनरूपं धत्ते। प्रस्तुतिरस्याः भारतीयानां मूलग्रन्थेषु वेदेषु सदैवावलोक्यते। विक्रम-श्रीकृष्णदेवरायादिराज्ञां स्वर्णकाले इयं जनभाषारूपेण विलसदिति विदुषां भणितिः। भारतीयानां यथार्थवैदुष्यमस्माकीनप्रतिभा च वेदेतिहासपुराणयोगायुर्वेदव्याकारणादि-नानाशास्त्रेषु सर्वविधवाङ्मयमस्यामेव परिपुष्टमिति लोकविदितमेव। "**सा प्रथमा संस्कृतिर्विश्ववरा**" इति उक्तिरनुसारं संस्कृतिरेषा विश्वस्य प्रथमा वर्तते, यस्य तत्त्वानि गीर्वाण्यां सर्वत्र विवृतं वर्तते। वेदस्य साक्षात् सम्बन्धः ज्ञानेन वर्तते। ज्ञानेन सह तादृशघनिष्ठसम्बन्धः अनयैव जाता। तदपि अस्माकं देशे भावनैषा शाश्वतं चिरञ्चतिष्ठति। यस्याः प्रभावः सर्वाधिकशक्तिमयी आसीत्, साम्प्रतमस्ति, भविता च।

**गीर्वाण्याः भाषिकं वैषिष्ट्यम् –इत्यमरः ।**

संस्कृतशब्दस्योत्पत्तिः -सम् उपसर्गपूर्वक कृञ् धातोः क्त प्रत्यये कृते सति जायते। यस्यार्थः परिमृष्टा,परिमार्जिता,परिष्कृता संस्कारमयी शुद्धश्चेत्यर्थः। इदं तदा एव सिद्धं भवति यदा ज्ञानशब्दस्य तात्पर्यं विषयग्रहणेनैव अर्थग्रहणपूर्वकम्, अनुभवगम्यमपि भवेदिति। अत्र शाङ्करवाक्यं बुद्धौ आयाति यत् "**आत्मानं विद्धिः**" । इदमुपर्युक्तमेव बोधयति। अर्थात् नेत्रवान् भवति चेदपि न कोऽपि लाभः "**ज्ञानवान्** " भवेदित्यर्थः। तेषां मते ज्ञानी नित्ययुक्तः। श्रीमद्भगवद्गीतायामपि अयमेवविचारः विवृतः। ज्ञानमिदं निर्मलं सात्विकं भवति। ज्ञानवानेव मुमुक्षत्त्वं प्राप्तुमर्हति। गीतायां श्रीकृष्णः उवाच यत् ज्ञानविज्ञानयुक्तमानवः एव भगवन्तं विन्दते। तद्यथा

**ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः।**

**युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः।। (भगवद्गीता,६-८)**

तथैव ज्ञानेन मानवस्य उद्धारो भवतु इति वेदेष्वपि ज्ञानस्य विषये विवृतमस्ति। उत्कृष्टमानवनिर्माणाय सर्वतोमुखविकासाय च भौतिकाध्यात्मिकयोः विषयाणामध्ययनमनिवार्यमिति व्याख्यातं दृश्यते। यथा-

**ये त्रिसप्ताः परियन्ति विश्वा रूपाणि बिभ्रतः।**

**वाचस्यत्तिर्बला तेषां तन्वे अद्य दधातु मे। (अथर्व-१-१-१)**

* संविदाध्यापकः, शिक्षाशास्त्रविभागः, गुरुवायूर् परिसरः, केरलम्

अर्थात् विशालमयजगदिदं त्रिसप्ततिः ज्ञानेन पूरितं वर्तते । अत्यन्तप्रभावकारी एकविंशति(२१) प्रकारकज्ञानानि शास्त्रपण्डितेभ्यः,मुनिभ्यः,ज्ञानवृद्धेभ्यः सम्पादनीयानि वर्तन्ते । बह्वीषु भाषासु कवयः ज्ञानवैराग्यविषयेषु सुष्ठुव्याख्यातम्। इदं ज्ञानविषयकं द्योतयति। इत्थं भारतस्य नैकासु भाषासु संस्कृतभाषायाः प्रभावः वर्तते। यत्र कविपुङ्गवाः यथा व्यास-भास-कालिदासः-भारविः- वाल्मीकिः– कल्हणः-भर्तृहरिः- भवभूतिः-अश्वघोषः-माघः-मम्मटादयः संस्कृतभषायामेव स्वीयकृतिषु कविराजानः लोकोद्धारकमर्मग्नाः गीर्वाण्यामेव व्यरचयन्। कार्यमिदं सर्वं संस्कृतभाषायाः वैशिष्ट्यवर्धने महते उपकाराय वर्तते।

**चरित्रनिर्माणम् -**

पदमिदं चरित्रं नत्वेकेनपदेन व्याख्यातुं शक्यम्। कश्चित् पुरुषः कस्मिन् वंशे जन्मालभत् ? कथमध्ययनमकरोत्? अधीतांशान् कथमाचारे आनीतवान् -इत्यादिबहून् विषयान् परामृश्यैव चरित्रशब्दस्यव्युत्पत्तिं विश्लेषयितुं समर्थाः भवेम। वैदिककाले वेदाध्ययनं कुर्वन्तः विदुषः तस्य नाम्नि एव उपाधिमपि योजयन्तः अवलोक्यन्ते। यथा– द्विवेदी- त्रिवेदी- चतुर्वेदी- शास्त्री- आचार्य- घनपाठिप्रभृतयः। अर्थात् अध्ययनाध्यापनकलायामुदाहरणमिदं वक्तुं शक्यम्। तर्हि अमीषां चरित्रमपि तादृशं भवति। अमी सर्वे शास्त्रोक्तधर्माचरणेनैव वेदोक्तविचारान् पालयन्तीति। परमधुना अस्य विरुद्धं दृश्यते। कालेऽस्मिन् वञ्चना, अध्ययने अननुशासितशिक्षाग्रहणं, नैराश्यभावना लक्ष्यराहित्यं प्रभृतांशाः अधिकतया दृग्गोचरे समायान्ति। परं तस्य निवारणाय ह्रासभावनायाः उन्मूलनाय च सर्वोत्कृष्टशिक्षा सहायति। संस्कृतशिक्षा चरित्रनिर्माणे स्वस्थानमावहति। संस्कृतवाङ्मये चरित्रनिर्माणविषयविचाराः बहवोऽत्र अवलोक्यन्ते।

**जनसामान्यात् दूरे गीर्वाणवाणी –**

भाषैषा साम्प्रतं न जनभाषास्ति। अर्थात् जनानां मुख मुखे व्यवह्रियमाणा नास्तीत्यर्थः। अस्याः अनुप्रयोगोऽपि अत्यन्तन्यूना। पाश्चात्यानामाक्रमणेन सुव्यवस्थितात्यन्तरहस्यगम्भीरमयी भाषैषा नष्टा। तस्मात् न सर्वैरधीयते। अतः अस्याः ह्रासो जातः। यद्यपि समस्तलोकोद्धाराय सामर्थ्यमयी नाधुना परिदृश्यते। मोक्षदायिनी-सुविचारसंवर्धिनी-शान्तितेजोदायिनी नेदानीं विश्वगुरुभाषात्वेन राराजते। परं व्यावसायिकक्षमतोन्नयविषयाणामेव प्राधान्यमन्याः भाषाः स्थानमावहन्ति। व्यायसायिकोन्नयिनी

नास्तीत्यत: अस्या: प्राधान्यं साम्प्रतिके समाजे न क्वापि पर्यवलोक्यते।

**पठनपाठनादिषु तिर्यङ्मुखी –**

अनुस्यूततया अध्ययनं, नैरन्तर्याभ्यास:-पारायणम्-उपासनेत्यादय: एवास्यप्राणभूता:। गीर्वाण्यां विद्यमानानेकानि शास्त्राणि, वेदा:, उपनिषद:, नैरन्तर्याभ्यासेन विना हस्तसात्करणं कष्टकरमेव।

अर्थात् पदं पदं प्रतिक्षणं मननस्मरणादिकं कुर्यादेव। मार्गे गच्छन्नपि मानसिकचिन्तनं नैरन्तर्येण कर्तव्यमेव। तेनैव ज्ञानविज्ञानमय ब्रह्मरहस्यमयवेदान्तशास्त्राणि शब्दब्रम्हनिष्ठव्याकरणादिशास्त्राणि चिरं बुद्धौ स्थास्यन्ति तद्भिन्नतया न। परमधुना संस्कृतविद्यालय-महाविद्यालय-विश्वविद्यालयेषु विरुद्धतया प्रचलति। क्षणाभ्यन्तरे परिवर्तनमायाति आधुनिककाले। तद्वदेव शिक्षणरीतिरियञ्च परिवर्तिता। कक्षापठनकालं यावत्, एव अस्या: श्रवणं-पठनं-मननञ्च,तदन्तरकाले अभ्यास: न भवति। आङ्गलभाषैव अध्ययनं कुर्मश्चेत् न। अत: अस्या: अध्ययनप्रक्रिया नष्टा गता। छात्रा: अन्यान्यक्रियासु प्रवृत्ता:, अत: कालेऽस्मिन् अध्यनाध्यापनप्रक्रिया अधोमुखी जातेति कथने नास्ति क्लेश:।

**व्यावसायिकाभिमुखजीवनक्रम:-**

पाश्चात्यशिक्षया प्रभावित: देशोऽयं स्वीयास्तित्वं सम्पूर्णतया विस्मरन् वर्तते। वैदिककाले धर्मसदाचारादर्शपूर्णमयजीवनमासीत्। जीवनाय नैकेषां संसाधनानां नासीदावश्यकता। ज्ञानपूर्वकत्वचा शरीरसंरक्षणं- मोक्षपरकबुध्या आत्मन: परिरक्षणमेव प्रमुखं लक्ष्यमासीत्। परमधुना विपरीतं दृश्यते। सुखभोगलालसमयोऽयं मानव: भौतिकसंसाधनानि एकत्रीकरणे, तेषां संरक्षणे चैव सम्पूर्णं जीवनं यापयन्वर्तते। येन यद्वास्तविकं भारतीयं मूल्यं नष्टमभवत्। द्वितीयमद्देश्यं शिक्षा तदर्थं गृह्यते उदरपूरणाय,उद्योगफलप्राप्तये एव। यस्मिन् विषये उद्योगा: न सन्ति यत्र धनस्य सम्पादनयोग्यता नास्ति यद्यपि ज्ञानविज्ञामययुतं शास्त्रं विषयं वा भवतु सामाजिका: तस्याध्ययने विमुखतां प्रदर्शयन्ति। धनलाभापेक्षार्थमेव विद्याग्रहणम्। येन भारतीयं धार्मिकमूल्यं नाशं गच्छति।

**देशविदेशेषु गीर्वाणीं प्रति आदरभाव: –**

विवेकानन्दसदृशा: भारतीयशास्त्रविज्ञानं-शान्तिञ्चाप्रपञ्चे प्रचारं अकुर्वन्। तदनन्तरकाले च बहवो हि विद्वांस: भाषामेनां तन्निष्टशास्त्राणीमानि च स्व स्व भाषासु अनूदितवन्त:। श्रीमद्भगवद्गीताया:

शताधिकभाषासु अनुवाद: लभ्यते। वैदेशिका: संस्कृते गहनरुचिञ्च प्रदर्शयन्त: दृश्यन्ते। गीर्वाण्या: अन्यदेशेषु विकासाय भाषाविद: सर् मोनियर् विलियम् तथा डा.ए.बि.कीथ् प्रभृतय: महान्तं कृषिं अकुरुताम् । जर्मनी-आस्ट्रेलिया- जापान्- श्रीलङ्का-इन्दोनेषिया-वियत्नां-प्रभृतिदेशेषु सास्कृतभाषायां, साहित्ये विस्तृतानुसन्धानं प्रचलमानं वर्तते। भाषायामस्यां विद्यमानज्ञानविज्ञानमेव सर्वत्र संसारे अस्या: उपरि चर्चाया: हेतु: इति कथने नास्ति संशय:।

**दिशाविहीना: अस्मत्संस्कृतज्ञा:-**

धर्ममयी भाषेयं वेदपठनपाठनपर्यन्तं सीमितं जातम्। शास्त्रार्थादिषु एव भागभागित्वमित्येव लक्ष्यमस्ति, आहोस्वित् जीवनभृति: कर्मकाण्डादिकं यावद् एव सीमितमिति च । अर्थात् ज्योतिषादिकर्मेभ्य: जीवनयापनं एवमुदरपोषणपर्यन्तमेव सीमिता: संस्कृतविद्वांस:। सङ्गणकादिप्रविधिमाध्यमेन च नूतनतथ्यानां विकासे प्रयन्तलोप: दृश्यते। विषयेऽस्मिन् युवान: न चिन्तयन्ति, अत: अस्या: हानि: महती जायते। संस्कृतभाषायां विपुलं पुष्कलं विज्ञानं वरीवर्ति। परं तस्या: अनुप्रयोगे विदुषां न्यूनता अद्यावधि: अवलोक्यते । अधिकसंख्यका: विद्वांस: स्वीयक्षेत्रापेक्षया क्षेत्रान्तरे कार्यरता:, व्यावसायिकक्षेत्रादिषु संल्ग्ना:। प्रवृत्तिहीनता दिशाहीनताया: द्योतकं भवति। यथा –

**जानामि धर्मं न च मे प्रवृत्ति:**..... ...

**सूचना:-परामर्शाश्च –**

१)संस्कृताध्ययनं मुख्यतया नूतनाविष्कारार्थं ,तथ्यान्वेषणं ज्ञानार्थञ्च स्यात्।

२)औद्योगिकदिशा अस्या: अध्ययनावकाशा: वर्धनीया:।

३)उत्कृष्टशास्त्रगर्भितपदजालेन ग्रन्थलेखनं न स्यात्।

४) भाषैषा जनसामान्या भवेत्। सर्वेऽपि अवगन्तमर्हा: स्यु:।

५) भाषैषा अनुप्रयोगात्मिकी स्यात्।

६) भौतिकसंसाधनेषु अनुप्रयोगाय अत्यधिकावसरप्रकल्पनम्।

७) शिक्षका: कर्मनिष्ठा:,अध्यापने इच्छुका: स्यु:।

८) सदा शिक्षक: आदरभावयुत: स्यात् । न तु वञ्चनपर:।

९) छात्रेषु सद्भावनायाः वर्धनाय प्रयत्नः वेधेयः।

१०) भाषायां भाषात्वस्थानं, विषयस्थाने विषयत्वस्थानमपि कल्पनीयम्।

११) मर्यादा –आत्मतृप्तिः -समाजे शान्तिः-सुहृद्भावनेत्यादि वर्धनाय महती हितकरी च वर्तते।

१२) आजीविकार्थं जीवनोन्नयनार्थञ्च सन्देशपूर्णविषयाः नैके सन्ति।

यथा- अ) धर्मशास्त्रम् आ) ज्यौतिषशास्त्रम् इ) आयुर्वेदः ई)योगः, उ)पर्यावरणविज्ञानम्, ऊ) समाजविज्ञानम, ऋ) सङ्गीतकलाः, ए)अनुवादः। एवं नैके विषयाःवर्तन्ते। अस्याः अनुसरणेन उपासनेन च लोके यशांसि प्रापयति। पुष्कलधनञ्च प्रददाति। विधिवत् धर्माचरणेन भारतस्य पुनः विश्वगुरत्वस्थानं सम्पादयितुं शक्यम्। वेदोपनिषदादिषु प्रोक्तसूचनाः परिपालयन् मानवोऽपि असाध्यं सुसाध्यं कृत्वा अर्थात् त्यागादिगुणान् संवर्धयन् संस्कृतशिक्षया कर्मनिष्ठतां सम्पाद्य संस्कृतनिष्ठसिद्धान्तान् विचाराञ्ञानुपालयन् मूल्यानि च संरक्षयन् मानवजीवनं सानन्दमयसुखमयलोकोपकारकञ्चकर्तुं पुनः एकीभूय सद्भावनायाः संवर्धने कार्योन्मुखिनः भवेम।

**********

**सन्दर्भग्रन्थसूची :-**

१) मूल्यशिक्षा -प्रो.रामशकल पाण्डे

२) शिक्षा की दार्शनिक एवं समाजशास्त्रीय पृष्ठभूमि :- प्रो.रामशकल पाण्डे

३) शिक्षायाः दार्शनिकाधाराः - डा- सोमनाथसाहुः

**सुवर्णपुष्पितां पृथ्वीं विचिन्वन्ति नरास्त्रयः ।**
**शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ।।**

पञ्च./ मित्रभेदः /43

# शिक्षणकर्मणि अन्तर्जालस्य विनियोगः

✍ Dr. S.T.P KANAKAVALLI *

नवनवोन्मेषशालिनी प्रज्ञा प्रतिभा इति आर्षवचनम् । जिज्ञासां विना प्रतिभा नागच्छति । ज्ञातुमिच्छा जिज्ञासा । प्रश्नस्योपशमनं नाम ज्ञानम् । जीवनचक्रे नानाविधाः प्रश्नाः समायान्ति । प्रश्नानामुपशमनं कदाचित् गुरुमुखात्, कदाचित् वृद्धानां साङ्गत्येन, कदाचित् सहपाठिभिः, कदाचित् कालक्रमेण च भवति । उक्तञ्च सुभाषिते -

**आचार्यात् पादमादत्ते पादं शिष्यः स्वमेधया ।**
**पादं सब्रह्मचारिभ्यः पादं कालक्रमेण च ॥**

शिक्षायाः ग्रहणं त्रिविधम् – औपचारिकम्, अनौपचारिकम्, निरौपचारिकमिति । परिवर्तिते संसारे शिक्षायामपि परिवर्तनं जायते । यतो हि समाजानुगुणं शिक्षायां, शिक्षानुगुणं समाजे च निरन्तरं परिवर्तनं जायते । शिक्षाक्षेत्रे प्रसारमाध्यमानां बहूपयोगः वर्तते । तासु अन्तर्जालस्य स्थानम् अन्यतमम् । अनया नूतनपद्धत्या विद्यार्जनं कारयितुं सुलभतमं जातम् । सञ्चारमाध्यमैः अध्यापनं रुचिकरम्, आकर्षकम्, उत्साहवर्धकञ्च भवति । अत्र निरन्तरप्रयत्नशीलाः अध्यापकाः, भाषाविशेषज्ञाश्च । स्वस्थाने उपविश्य एव वयं विना श्रमं, क्षणकालेनैव स्वविषयानुगुणं पाठ्यांशं प्राप्तुं शक्नुमः । सर्वेपि संस्कृतं नीरसम्, अरुचिकरञ्च आमनन्ति । परन्तु शिक्षकाः तद्विरुद्धमिति निरुपयन्ति । संस्कृतशिक्षकाः संस्कृतमेव न पाठ्यन्ति अपि तु अन्तर्जालस्य उपयोगमपि सुष्ठु कुर्वन्तीति निरुपयन्ति स्वशिक्षणद्वारा ।

**अन्तर्जालस्योऽपयोगः** –

आबालाद् वृद्धपर्यन्तं सर्वेऽपि अन्तर्जालविनियोगे सक्रियाः सन्ति । ते स्व-स्वरुच्यनुगुणम् अन्तर्जालस्य विनियोगं कुर्वन्ति । केचन शिशुगीतानाम् अवलोकने, केचन चित्रकथानां(Cartoon) दर्शने, अन्ये केचन विद्यालयस्य गृहकार्यकरणे युञ्जते । तथैव यूनाः स्वविषयानुगुणं गवेषणं कुर्वन्ति । सन्देहास्पदे स्वमित्राणां वा विषयविदुषां वा सम्पर्कं कृत्वा स्वसन्देहनिवृत्तिं कुर्वन्ति । कदाचित् प्रत्यक्षेण कदाचित् सञ्चारमाध्यमैः। वैज्ञानिकयुगेऽस्मिन् संस्कृतविद्वांसः , संस्कृतरसिकाः अपि अन्तर्जालस्य प्रयोगकरणे पटवः । ते स्वविषयांशानामध्ययनाय अन्तर्जालस्य विनियोगं कुर्वन्ति ।

* Post Doctoral Research Fellowship(UGC),Rastriya Sanskrit Vidyapeetha,,Tpty

**संस्कृताय औपकारिकाऽन्तर्जालानि** –

संस्कृतक्षेत्रे अनेकानि उपयोगकराणि अन्तर्जालपुटानि सन्ति । तानि द्विविधानि – वैय्यक्तिकानि, सामूहिकानि च । तानि -

- अन्तर्जालम्
  - संस्कृतविकिपीडिया
  - संस्कृतभारती
  - शोधगङ्गा
  - संस्कृतसंसाधनी
  - विविधवाहिन्य:
  - जालस्थानकानि
  - ई-शब्दकोशा:
  - ई-कक्षा:
  - विविधपत्रिका:
  - मुखपुस्तकम्
  - You Tube
  - Blog
  - What's App
  - Twitter
  - Skype

इदानीमेकैकस्यापि उपयोगविषये ज्ञास्यामः ।

**संस्कृतविकिपीडिया** –

स्वविषयाऽवगाहनाय सन्देहनिवारणाय च बहूपयोगि भवति संस्कृतविकिपीडिया । मुक्तविश्वकोशोऽयम् । अस्य निर्माणाय सम्पूर्णविश्वतः स्वयंसेवकाः त्रिंशाधिकभाषासु स्वयोगदानं कृतवन्तः, कुर्वन्त्यपि । अत्र न केवलं सन्देहनिवृत्तिरेव भवति अपि तु नूतनपदप्रयोगज्ञानं, ज्येष्ठानां शैल्यवगाहनमपि भवति । प्रतिदिनमेकैकमंशमादृत्य तत्र शास्त्रीयं वा भवतु अथवा आधुनिकविषयं वा भवतु अथवा सुभाषितं वा, तद्विषयकं सारांशं मुख्यपुटे प्रस्तूयते । अत्र केवलं गवेक्षणकार्यमेकमेव न , अपि तु स्वयोगदानमपि कर्तुं

शक्यते। अत्रापि विविधांशाः सन्ति -

- विकिपीडिया(Wikipedia)
- विकिस्रोतः(Wiki Source)
- विकिसूक्तयः(Wiki Quote)
- विकिशब्दकोशः(Wiki Dictionary)
- विकिपुस्तकानि(Wiki Books)
- मेटाविकि(Meta-Wiki)
- विकिकामन्स्(Wikimedia Commons )

उपर्युक्तात् कमपि अंशं चित्वा स्वसन्देहनिवारणं कर्तुं शक्नुवन्ति शिक्षकाः, शोधार्थिनश्च।

एतत् संस्कृतजगतः वरमिव प्रतिभाति । यतोहि सर्वास्वपि भाषासु गवेक्षणविषये अनेकानि गवेक्षकाणि सन्ति। परन्तु गीर्वाण्याः कृते अद्वितीयोऽयम्। अस्य प्रचारप्रसाराय ये कार्यं कुर्वन्ति ते ज्येष्ठाः विद्वांसः एव न , अपि तु संस्कृतशोधार्थिनः , संस्कृतरसिकाः अपि निरन्तरं योगदानं कुर्वन्ति।

**संस्कृतभारती** –

1981 तमे वर्षे तिरुपतौ इयम् आरब्धा । अस्याः उद्यमस्तु निरन्तरं संस्कृतभाषायाः, साहित्यस्य, परम्परायाः, संस्कृतेः निहितज्ञानभण्डारस्य च संरक्षणं विकासः प्रचारः च। अत्र शिक्षार्थिनां वयसः अनुगुणं, शैक्षिकपृष्ठभूम्यनुसारं, वृत्त्यनुसारं, रुच्यनुसारं च विभिन्नानि पुस्तकानि सन्ति । तथा विविधशास्त्रीयपुस्तकानि, शास्त्रीयाधारितसान्द्रमुद्रिकाः, ध्वनिपुस्तकानि इत्यादीनि उपलभ्यन्ते।

वयं पत्राचारमाध्यमेन पठितुं शक्नुमः। सम्भाषणसन्देशः इति मासिकपत्रिका, तस्याः ई प्रतिकृतिः अपि उपलभ्यते। तत्र संस्कृतजगति जायमानाः वार्ताः, शिबिराणि, शोधलेखाः, कणिकाः, लघुकथाः, उपन्यासाः इत्यादयाः बहवः अंशाः सन्ति। तद्वारा अस्माकं भाषाशुद्धिः, ज्ञानवृद्धिश्च जायते। तथैव नूतनजनैः सम्पर्कः अपि जायते। तेनापि संस्कृतसम्भाषणस्य, विषयज्ञानस्य, सन्देहनिवृत्तेर्वा अवकाशः जायते।

**शोधगङ्गा** –

अत्र विविधसंस्थासु एवं विविधभाषासु क्रियमाणानि शोधकार्याणि उपलभ्यन्ते । अत्र शोधचयनविषयकज्ञानं तथा शोधलेखनविषयकज्ञानञ्च वर्तते। प्रान्तीयभाषासु विषयाः उपलभ्यन्ते इति विशेषः। एवं शोधशीर्षकस्य पुनरुक्तिरपि न भवति।

**संस्कृतसंसाधनी** –

हैदराबादविश्वविद्यालयस्य संस्कृतविभागेन संस्कृतसंसाधनी नामक (A Sanskrit Computational Toolkit) संसाधनस्य निर्माणं कृतम्। अत्र

- साधनानि(Tools)
- कोशाः(Dictionaries)
- कार्पस्(Corpus)

- प्रकाशनानि(Publications)
- शोधकार्याणि(Thesis)
- गवेषिका(Search Engine)
- अनुसारकम्(MT(Skt-Hnd))
- सविश्लेषण-ई-ग्रन्थ(E-Reader)

यदपेक्षितं तदन्वेष्टुं शक्यते। बहुसुलभतया अपेक्षितकार्यं कर्तुं शक्यते।

**विविधवाहिन्यः** –

दूरदर्शने प्रतिदिनं – **संस्कृतवार्ताः** तथा सप्ताहे – **वार्तावली** नामक कार्यक्रमस्य प्रसारणं भवति । संस्कृतमन्दाकिन्यां वाहिन्यां – विविधपण्डितां पाठाः, सङ्गोष्ठ्यादीनां च प्रसारणं प्रचलति । तथैव तिरुमलतिरुपतिदेवस्थानस्य (ति.ति.दे) भक्तिवाहिन्यां - "संस्कृतं नेर्चुकुन्दाम्" (संस्कृतं पठामः) इति कार्यक्रमस्य प्रसारणं जातम्।

एतादृशानां माध्यमानां सहाय्येन न केवलं संस्कृतप्रचारः अपि तु चतुर्विधकौशलानामपि वर्धनं भवति। यथा नूतनपदप्रयोगानां ज्ञानं, नूतनवस्तुज्ञानं, क्रीडया संस्कृतवर्धनं, चलनचित्रस्य गीतानां माध्यमेन संस्कृते रुच्युत्पादनम् इत्यादि मुख्यांशाः वर्तन्ते । शिक्षकस्य मुख्यकर्तव्यं संस्कृते रुच्युत्पादनमेव, अतः क्रीडया, मनोरञ्जनेन च रुचिमुत्पादयितुं शक्यते इति ज्ञायते।

**जालस्थानकानि** –

ई-पुस्तकानि -

सर्वेपि ग्रन्थालयं गत्वा अध्ययनं कर्तुं न शक्नुवन्ति। अतः गृहे उपविश्य अन्तर्जालमाध्यमेन अनेकानि संस्कृतोपयोगकानि ई-पुस्तकानाम् अवलोकनेन स्वसन्देहनिवारणं कुर्वन्ति। अधः अनेकानि ई सङ्केतानि सन्ति। तानि -

https://archive.org/search.php?query=%28sanskrit%29
http://www.sanskritebooks.org
http://www.sanskritebooks.org/ebooks-download/
https://sites.google.com/site/bharatasahitya/sanskritebooks
http://www.sanskrit.nic.in/ebooks.php
https://sanskritdocuments.org/scannedbooks/
http://tamilcube.com/sanskrit-books/
https://www.scribd.com/
https://sanskritlibrary.org/
https://sanskrit.inria.fr/portal.html
https://cudl.lib.cam.ac.uk/collections/sanskrit/1

https://sa.wikisource.org/wiki/मुख्यपृष्ठम्

उपयुक्तजालस्थानकानि –

http://learntheeasywaysanskrit.in/

https://www.samskrittutorial.in/

https://www.samskritpromotion.in/

https://sites.google.com/site/praachiprajnaa/antarjalapravahah-1/sanskrtadrsyasravyasamagri

**ई-शब्दकोशाः –**

संस्कृतजगति अनेकाः शब्दकोशाः सन्ति । तानि पण्डिताः विविधान्तर्जाले स्थापिताः । तान्यपि विषयानुगुणम् , भाषानुगुणञ्च प्राप्तुं शक्यते । तानि -

https://archive.org/details/sanskritenglishd00moniuoft

http://www.andhrabharati.com/dictionary/sanskrit/FontHelp

https://lrc.la.utexas.edu/eieol_base_form_dictionary/vedol/7

https://sanskritdocuments.org/dict/

http://sanskrit.uohyd.ac.in/scl/#

https://www.sanskrit-lexicon.uni-koeln.de/monier/

http://spokensanskrit.org/

https://www.worldcat.org/title/sanskrit-telugu-dictionary-telugu-meanings-for-sanskrit-words-samskrtandhranighantuh-sanskrtandhranighantuvu/oclc/64009661

https://sa.wiktionary.org/wiki/मुख्यपृष्ठम्

**ई-कक्षाः –**

अनौपचारिकमाध्यमेन अध्यापयितुम् अनेकाः संस्थाः कार्यं कुर्वन्ति । शोधार्थिनः तेषाम् अन्तर्जालसङ्केतमाध्यमेन अध्येतुं शक्नुवन्ति । कानिचन अन्तर्जालसङ्केतानि अधः सन्ति । तानि -

Learn Sanskrit  Be Model : https://www.youtube.com/watch?v=HTrDZ_5YXow&feature=youtu.be

MOOCs/ Swayam classes

Open Pathshala : https://openpathshala.com/

Learn Sanskrit Online: https://learnsanskritonline.com/

http://www.learnsanskrit.org/

Chinmaya International Foundation : https://www.chinfo.org/index.php/easy-sanskrit-course

https://sanskrit.today/free-online-sanskrit-classes/

https://ochsonline.org/product/sanskrit-level-1/

**विविधपत्रिकाः** –

पत्रिकाणां माध्यमेन संस्कृतजगति प्रचाल्यमानानाम् अनेकेषां विषयाणां ज्ञानं प्राप्तुं प्रभवामः । तत्र काचनपत्रिकाः एवं सन्ति -

http://ebooks.tirumala.org/

https://sambhashanasandesha.in/

https://sites.google.com/site/praachiprajnaa/sanskrtavarta

http://sudharma.epapertoday.com/

http://vishvasyavrutantam.com/

**मुखपुस्तकम्** –

सामूहिकचर्चायाः स्थानम् । अत्र विविधक्षेत्रेषु जायमानाः वार्ताः, सूचनाः, सन्देहाः, कणिकाः, कक्षाः, व्याख्यानानि, आमन्त्रणनिमन्त्रणादि विषयसूचनाः, स्वाभिप्रायाः इत्यादयाः विविधांशाः अत्र भवन्ति । तत्रापि रूच्यनुगुणं , वयोपरिमित्यनुगुणं समूहानि भवन्ति । सन्देहनिवारणमपि कुर्वन्ति ज्येष्ठाः, संस्कृतधुरन्धराश्च । विविधस्पर्धाः, प्रश्नकरणानि, गीतानि इत्यादयांशाः अंशाः अपि सन्त्यत्र ।

**You Tube** –

भाषाकौशलविकासे यथा श्रवणस्य अधिकं महत्वं वर्तते तथैव दृश्यस्यापि । You Tube मध्ये संस्कृतसम्बन्धितानि अनेकानि विषयानि सन्ति । यत्र कुत्रापि जातस्य विषयस्य पुनरवलोकनाय, भाषापाण्डित्य सम्पादनाय उत्तमस्थानं कल्पयति अयम् । अत्र कक्षाः, व्याख्यानानि, गीतानि, कणिकाः, वार्ताः, सुलभसंस्कृतपाठानि, ज्येष्ठानां साक्षात्कारः, क्रीडया संस्कृतवर्धनम् इत्यादयाः विविधांशाः अत्र सन्ति । न केवलम् अर्वाचीनम् अपि तु शास्त्रीयव्याख्यानानि, व्याकरणांशाः अपि सन्त्यत्र ।

**Blog** –

स्वविषयकज्ञानम् प्रपञ्चाय वक्तुं वा , संस्कृतसम्बन्धितं कमपि विषयं स्वीकृत्य सूक्ष्मेक्षिकया पर्यालोचनमत्र क्रियते । अत्रापि विषयानुगुणं , रुच्यनुगुणञ्च अंशाः भवन्ति ।

**Skype** –

ई शिक्षणे अयमेकं स्थानं कल्पयति । दूरस्थजनयोः मध्ये अथवा समूहे वा एकवेलायां पाठयितुं, पठितुं वा अवकाशः भवति । अत्रापि रुच्यनुगुणं, समयानुगुणं च कक्षाः भवन्ति । संस्कृतजनेभ्यः अयमेकं विप्लमेव आनीतम् । दूरस्थशिक्षा अपि अनेन माध्येन सुलभतरा भवितुं शक्यते ।

**दूरवाणी –**

इदानीं तु दूरवाणी शरीरस्य अङ्गमिव जातम् । समाजस्य आवश्यक्तानुगुणम् अस्याः आवश्यक्ता अपि अधिका जाता । पूर्वं केवलं सम्पर्कसाधनाय एकं माध्यममासीत् । परन्तु इदानीं जीवनचक्रे मुख्यावश्यक्तासु एका जाता । Smart Phones मध्ये What's App , Twitter , Sanskrit Apps, Emails, Google Translator इत्यादयाः अंशाः कस्याश्चित् दूरवाण्यां सन्ति, कस्याश्चित् न । तदा ते Play Store मध्ये गत्वा Download कुर्वन्ति । अनेन सन्देहनिवारणं, कक्षायां कथं पाठनीयं, साधनानि कानि इत्यादयाः विविधांशाः चेतुं शक्नुवन्ति । आचार्य मदन झा महोदयस्य संस्कृतजगति अद्वितीयं योगदानं वर्तते । ते एव विविधाः Sanskrit Apps नामकवृक्षस्य आरोपणं कृत्वा मधुराणि फलानि अस्माकं कृते दत्तवन्तः।

**उपसंहारः -**

अनेन ज्ञायते यत् विना अन्तर्जालमाध्यमेन वयं किमपि कर्तुं न शक्नुमः । यथा स्वशरीरपोषणाय आहारमपेक्षते तथैव स्वज्ञानवर्धनाय , सन्देहनिवारणाय च अन्तर्जालमपेक्षते । कक्षायाः अध्यापनात् पूर्वं अध्यापकस्य पूर्वसज्जता अनीवार्या भवति । यदि तमेव अंशरूपेण स्वीकृत्य PPT माध्यमेन वा दृश्यश्रव्यसामग्र्याणां माध्येन वा पाठयामश्चेत् सा कक्षा न केवलं रुचिकरम् अपि तु चिरस्मरणीयमपि भवति। स्वस्थाने उपविश्य एव वयम् अन्तर्जालस्य विनियोगेन तानि सर्वाण्यपि अपेक्षितांशानि प्राप्तुं शक्नुमः ।

**********

**अनुशीलिताः ग्रन्थाः -**


1. https://www.inflibnet.ac.in/hindi/about/mission.php
2. http://sanskrit.uohyd.ac.in/scl/
3. https://www.samskritabharati.in
4. https://sa.wiktionary.org/wiki/मुख्यपृष्ठम्
5. https://sa.wiktionary.org/wiki/संस्कृतशब्दकोशः
6. http://blog.practicalsanskrit.com/2009/12/how-we-learn-and-grow.html
7. http://spokensanskrit.org/index.php
   tran_input=choice&direct=es&script=hk&link=yes&mode=3
8. https://www.scribd.com/

# शिबिरविधिः

✍ एस्.वैष्णवी *

**प्रस्तावना-**

आसीत् वैदिकवाङ्मयस्य, शास्त्राणां च समृद्धः समुचितः सुन्दरः कालखण्डः कश्चन । सः दूरे गतः। अनन्तरं कश्चन कालखण्डः आगतः वेदशास्त्राणां रक्षणस्य महदावश्यकतायाःयस्मिंश्च भट्टोजीदीक्षित-वाचस्पतिप्रभृतयः बहवः प्राचीनाः विद्वांसः शास्त्ररक्षणाय स्वजीवनमेव समर्पितवन्तः । अनन्तरं च कालः इतोऽपि जटिलः जातः। शास्त्राणाम् आधारभूता या संस्कृतभाषा, तस्याः संरक्षणस्य आवश्यकता आगता । स तु काल: अधुना अप्यनुवर्तते । तादृशे कालखण्डेऽस्मिन् संस्कृतभाषारक्षणे बद्धदीक्षा: बहवः आसन् सन्ति च । बहवः वैयक्तिकरूपेण संस्कृतप्रचारसंस्थाप्रतिष्ठापनेन च नानाविधान् प्रयत्नान् अकुर्वन् । बह्वीभिः संस्थाभिः परीक्षाः प्रचालिताः संस्कृतपत्रिकाः प्रकाशिताः ।

अन्ये केचन अज्ञाताः अप्रकटितनामानः अपि संस्कृभाषाप्रचारकार्यं कुर्वन्तः सन्ति ।एवं तत्र तत्र कार्यं कुर्वतीनां व्यक्तीनां संस्थानां च परस्परं सम्बन्धं प्रकल्प्य समग्रदेशे संस्कृतकार्ये एकसूत्रताम् आनेतुं, बहुविधसमस्याः दूरीकर्तुं च सङ्घटनात्मकस्य, जनान्दोलनस्य, प्रभावयुतस्य, कस्यचिद् अखिलराष्ट्रव्यापिकार्यक्रमस्य आवश्यकता अनुभूता संस्कृतकार्यकर्तृभिः। तामावश्यकतां पूरयितुम् उदिता "***संस्कृतभारती*** "।

**संस्कृतभारती -**

भाषा संस्कृतिः च सर्वथा सहैव प्रवर्तेते। एकस्यां नष्टायां सत्याम् अपरस्याः सत्वं कथमपि नश्यत्येव। असत्यां भाषायां तस्यां विद्यमानसंस्कृतेरपि अभावत्वं दृश्यते। तस्यां भाषायां विद्यमानविज्ञानं नश्यति। अतः "संस्कृतभारती "इति काचित् असर्वकारीया संस्था प्रारब्धा। सम्भाषणद्वारा संस्कृतस्य व्यवहारपथे आनयनम् अपि च प्राचीनसांस्कृतिकमौल्यानां पुनरुन्नतिश्च।

**संस्कृतभारत्याः क्रियाकलापाः**

संस्कृतभारत्याः कार्यक्रमान् प्रधानतया चतुर्धा विभक्तुं शक्यते। यथा –

- शिक्षणात्मकाः
- प्रशिक्षणात्मकाः
- प्रचारात्मकाः
- अभिवृद्ध्यात्मकाश्च

शिक्षणात्मककार्यक्रमेषु अन्यतमः भवति संस्कृतसम्भाषणशिबिरम् ।

* शोधच्छात्री, शिक्षाविभागः, राष्ट्रियसंस्कृतविद्यापीठम्, तिरुपतिः

## संस्कृतसम्भाषणशिबिरम्

संस्कृतभारत्याः प्रधानं, सत्त्वयुतं, प्रभावशालि च साधनं भवति **सम्भाषणशिबिरम्** । एकेन संस्कृतज्ञेन कृतं कार्यमिति न । यद्यपीदं दशदिनात्मकमेव भवति तथापि संस्कृतशिक्षणक्षेत्रे महत्त्वपूर्णपरिवर्तनस्यानयने प्रधानं पात्रं वहति । सम्भाषणशिबिरद्वारा संस्कृतक्षेत्रे नवचिन्तनस्य धारा काचित् प्रारब्धा। संस्कृतं कठिनं, व्यवहारायोग्यं,एकवर्गस्य भाषा इत्यादिभावनाः निष्कासयितुं सम्भाषणशिबिराणि महदुपकाराय कल्पन्ते । व्याकरणानुवादपद्धतिं विरुद्ध्य कृतस्य परिश्रमस्य कारणात् बहुविधशिक्षणपद्धतीनाम् समाहाररूपा, नवीना शिबिरपद्धतिः आविष्कृता ।

## सम्भाषणशिबिरस्य स्वरूपम् -

सम्भाषणशिबिरं नूतनेभ्यः संस्कृतभाषाध्ययनाय एका सजीवपद्धतिः । दशदिनानि यावत् प्रतिदिनं घण्टाद्वयं संस्कृतमाध्यमेन संस्कृतसम्भाषणं शिक्ष्यते । सम्भाषणशिबिरे लेखनं न भवति । अनुवादः न भवति। व्याकरणनियमानां कण्ठस्थीकरणं नास्ति, लिखितगृहकार्यं न भवति । सामान्यः प्रकोष्ठः । समाजस्य विभिन्नस्तरेभ्यः आगताः संस्कृताभिमानिनः भवन्ति । निश्चिते समये सरलः शिबिरशिक्षकः प्रविशति । तं दृष्ट्वा स्वागतीकुर्वन्ति शिबिरार्थिनः । शिक्षकस्य कार्यम् गीतेनारभ्यते । शिबिरार्थिनः उत्साहेन गायन्ति ।

शिक्षकः बहूनि वस्तूनि प्रदर्श्य उदाहरणानि वदति, वाक्यानि रचयति,वाक्यस्फोरकपत्राणि दर्शयति, चित्राणि दर्शयति, अभिनयेन कथया क्रीडया वा बोधयति। शिबिरार्थिनः अहमहमिकया पाठितमंशं वाक्ये योजयन्ति, सन्दर्भं वर्णयन्ति ,विनोदकणिकाः वदन्ति, दैनिकव्यवहारसम्बद्धवाक्यानि रचयन्ति, आनन्दिताः सन्तः सोत्साहं भागं ग्रहीष्यन्ति । एवं प्रचलति घण्टाद्वयं शिबिरे अध्ययनम् । एतत् शिबिरस्य सामान्यं बाह्यस्वरूपम् ।

शिबिरे प्रवेष्टुम् अर्हता का?

संस्कृतम् कथञ्चिदध्येतव्यमिति इच्छावन्तः सर्वेऽपि शिबिरे प्रवेष्टुम् अर्हाः।

समाजस्य सर्ववर्गीयाः अत्र सम्भाषणाभ्यासं कर्तुमर्हन्ति।

## विषयः कः?

सरलं व्यावहारिकं संस्कृतमत्र विषयः भवति। नित्यव्यवहाराय अपेक्षितमंशं संस्कृतसाहित्यात् उद्धृत्य सरलतमया शैल्या अत्र बोधयन्ति।

## प्रयोजनम्

संस्कृतं सरलमिति भावनायाः उत्पादनम् । संस्कृते अभिरुचिवर्धनम्। समाजे समरसता, राष्ट्रियैकता, संस्कृतक्षेत्रे सर्वसमस्यानिवारणं, भारतस्य राष्ट्रियसांस्कृतिकपुनरुज्जीवनम् च।

## शिबिरे पाठ्यक्रमः

संस्कृतस्य सुलभावबोधनदृष्ट्या शिबिरपाठ्यक्रमस्य बहु महत्वमस्ति । शिबिरपाठ्यक्रमः सुचिन्तितः सुव्यवस्थितः वैज्ञानिकश्च वर्तते । अधुना यः सम्भाषणशिबिरस्य पाठ्यक्रमः वर्तते सः बहुविधप्रयोगैः अनुभवेन च परिष्कृतः अस्ति । आरम्भकालिककार्यकर्तॄणां बहुपरिश्रमः अत्र निहितोऽस्ति। शिबिरपाठ्यक्रमस्य प्रायोगिकरूपप्रदाने विकासे च कृष्णशास्त्रि-जनार्दनविश्वासप्रभृतीनां साक्षाद्योगदानं बह्वस्ति । तथापि शिबिरप्रणाल्याः आरम्भकाले महाबलेश्वरभट्ट-सोति नागराज-रामकृष्णमाचार्य नरसिंहमूर्ति -कुटुम्बशास्त्रिप्रभृतिभिः प्रत्यक्षेण परोक्षतया वा कृतस्य परिश्रमस्य फलस्वरूपमेव संस्कृतभारत्याः कार्यकर्त्तारः इदानीमपि ससन्तोषं स्मरन्ति। अपि च शिबिरप्रणाल्याः परिष्कारे, पोषणे, प्रचारे च उपकृतवतां, विविधराज्यस्थितानां बहूनां विदुषां , कार्यकर्तॄणां च योगदानं भवति ।

## शब्दचयनम्

सम्भाषणान्दोलने दैनिकव्यवहारः संस्कृतेन भवेदिति विषये अधिकं महत्त्वं दीयते इत्यतः शिबिरपाठ्यक्रमे व्यावहारिकपदानां बह्वी आवश्यकता शिबिरे भवति । केचन शब्दाः प्राचीनग्रन्थानामवलोकनेन लब्धाः। केषाञ्चित् नूतनानां वस्तूनां संस्कृतपदानि युक्त्या निर्मातव्यानि । बहवः विद्वांसः अत्र सहकृतवन्तः । बहुभ्यः विद्वद्भ्यः केचन शब्दाः प्रेषिताः। ते युक्तायुक्तमालोढ्य -

१. उच्चारणसौलभ्यम्।

२. सुलभावबोधः।

३. प्रादेशिकभाषासाम्यता - इत्येतानंशान् पुरस्कृत्य तत्तद्वस्तूनां संस्कृतपदानि सूचितवन्तः ।

नित्यव्यवहारे अपेक्षिताः व्यावहारिकशब्दाः प्राचीनग्रन्थेभ्यः चिताः एवं युक्त्या शिबिरे उपयुज्यन्ते।

**पाठ्यक्रमे अन्तर्निहिताः विषयाः –**

- व्यवहारोपयोगिविषयाः
- सुबन्तांशाः
- तिङन्तांशाः
- कृदन्तांशाः
- अव्ययविषयाः
- समासांशाः
- संख्या
- गीतानि
- विनोदविषयाः

- कथाः

**सरलसंस्कृतस्य शिबिरपाठ्यक्रमः**

संस्कृतवाङ्मयं तु बहु विस्तृतमस्ति । तद्रक्षकाः व्याकरणांशविशेषाः, प्रयोगविशेषाश्च बहवः सन्ति । संस्कृताध्ययनस्य प्रारम्भं कृतवतां मस्तिष्के तत्सर्वं युगपत् पूरयितुं न शक्यते । 'दशदिनेषु प्रतिदिनं घण्टाद्वयम्' इति यः परिमितः कालः लभ्यते, तावति काले किञ्चित्शुद्धसंस्कृतसम्भाषणं कर्तुं संस्कृतस्य ये अंशाः अनिवार्यतया अपेक्षिताः, ते अंशाः शिबिरपाठ्यक्रमे स्वीकृताः।

**किन्नाम सरलसंस्कृतम् ? कानि उद्देश्यानि तस्य?**

- **सरलसंस्कृतम्**

सामान्यजनाः श्रोतारः पठितारः वा यां संस्कृतभाषां श्रुत्वा/पठित्वा सुलभतया अवगन्तुं शक्नुवन्ति तादृशी पाणिनीयव्याकरणानुमता संस्कृतभाषा "सरलसंस्कृतम्" इत्युच्यते।

**सरलसंस्कृतस्योद्देश्यानि**

१. संस्कृतं कठिनमिति भावनया संस्कृतं प्रति केचन पराङ्मुखाः भवन्ति,तादृशपरिस्थितेः निवारणम् ।

२. सम्भाषणे सहजतानुभूतिः ।

३. व्यावहारिकसम्भाषणे/लेखने दोषाणां न्यूनीकरणम् ।

४. असंस्कृतज्ञः अपि संस्कृते भावं ग्रहीतुं शक्नुयात् ।

**शिबिरपाठ्यक्रमे सरलसंस्कृतस्योद्देश्यानि -**

१.संस्कृताभ्यासे सारल्यकल्पनम् ।

२.सुलभावबोधप्रयोगशिक्षणम् ।

३. अल्पकाले सम्भाषणसामर्थ्यप्रदानम् ।

**शिबिरे सरलसंस्कृतम् -**

1.चतुर्थीविभक्तेः स्थाने षष्ठीविभक्तिरूपं ,"कृते" इति कृत्वा व्यवहारः ।

2.पञ्चम्यर्थे प्रतिपदिकं ,"तः" - योजयित्वा व्यवहारः ।

उदा - वृक्षतः, शालातः इत्यादिरूपेण प्रयोगः ।

3.लिट्लङोः अनिवार्यतां निवार्य, भूतकालार्थे 'क्तवतु' प्रत्ययस्योपयोगः ।

4.आत्मनेपदप्रयोगं विहाय परस्मैपदप्रयोगः एव यावच्छक्यम् प्रयोगे आनयनम् ।

5.कर्तरि प्रयोगेण वाक्यनिर्माणम् ।

6.युष्मच्छब्दप्रयोगनिवारणपूर्वकं मध्यमपुरुषस्य प्रयोगनिवारणम् ।

7.यावच्छक्यम् अजन्तशब्दानामेव प्रयोगः। अजन्तेतरशब्दाः अपि केचन अजन्तत्वेन परिवर्त्यन्ते । यथा - राजन् इत्यकारान्तशब्दं महाराज इत्यकारान्तत्वेन । मुनिः - मुनिवर: इत्यादिरीत्या।

एते अंशाः शिबिरे प्राधान्येन अनुस्रियन्ते । एतेषामनुसरणेन सारल्यं, दोषाणां न्यूनप्रसक्तिश्च भवति।

**सरलसंस्कृते अनुस्रियमाणाः इतोऽपि केचनांशाः -**

१.भारतीयभाषासु/प्रादेशिकभाषासु प्रयुज्यमानान् संस्कृतशब्दान्, तदभावे तत्सदृशसंस्कृतशब्दान् उपयुज्यैव यावच्छक्यं व्यवहारः।

२. उच्चारणसुलभानां ललिताक्षरयुक्तानां शब्दानां प्रयोगः।

३. अर्थावबोधाय अत्यन्तमपेक्षितानां शब्दानामेव वाक्ये निवेशः।

४. बह्वर्थकशब्दानां प्रसिद्धे एकस्मिन्नर्थे प्रयोगः ('एकः शब्दः एकस्मिन्नर्थे प्रयोज्यः') यथा बह्वर्थकः हरिशब्दः 'विष्णुः' इत्यर्थे प्रयुज्यते।

५. प्रसिद्धानां धातूनामेव यावच्छक्यमुपयोगः।

६ समानार्थकेषु क्रियापदेषु सत्सु अपि , एकस्मिन्नर्थे एकस्य क्रियापदस्य प्रयोगः। ('एकस्मिन्नर्थे एकं पदं प्रयोक्तव्यम्) यथा विद्यते', 'वर्त्तते', 'अस्ति' – इत्यादिषु 'अस्ति' इति एकस्य क्रियापदस्योपयोगः।

७.सन्धिरहितप्रयोगः वाक्येषु।

८.यत्र समासः सारल्याय कल्पते तत्रैव समासस्य उपयोगः। (यथा मन्त्रिणः समीपम् इत्यर्थे मन्त्रिसमीपम् इति।)

९. लघु लघु वाक्यैः व्यवहारः।

१०.क्लिष्टक्रियापदानां विभज्य प्रयोगः।

यथा - प्रयुञ्जते - प्रयोगं कुर्वन्ति।

**शिबिरविधिः**

शिक्षाशास्त्रे शिक्षणसम्बद्धतया प्रयुक्तः विधिशब्दः बोधनपद्धतिः इत्यर्थं सूचयति । शिक्षणविधिः इत्यस्य अध्यापनरीतिः, पाठनशैली, अवबोधनक्रमः, प्रयुक्तोपागमाः,विधयः इति वा अर्थः ग्रहीतुं शक्यः। शिक्षणपद्धतिः पाठितांशावगमने प्रभावं जनयति। उत्तमशिक्षणपद्धतिः दुर्बोधमपि विषयं सुलभतया अवबोधयितुं सहकारिणी भवति।शिबिरप्रणाल्यां शिबिरबिन्दूनाम् आनुपूर्व्यव्यवस्था काचिदस्ति। शिबिरबिन्दूनाम् पौर्वापर्यस्य अतीव प्राधान्यमस्ति। अनुवादं विना संस्कृतं संस्कृतमाध्यमेनैव पाठयितुं यथा आनुकूल्यं भवति तथा शिबिरबिन्दूनां निवेशनं व्यवस्थितरूपेण कृतमस्ति ।शिबिरपाठ्यक्रमे -

चतुर्थीविभक्तेः पञ्चमीविभक्तेश्च निवेशः नास्ति।

द्विवचनम् नास्ति।

लिट्-लङ्लुङादिलकाराः पाठ्यांशत्वेन न सन्ति।

आत्मनेपदप्रयोगः नास्ति। कर्मणिप्रयोगः न निविष्टः।

मध्यमपुरुषः न बोध्यते।

एवं षण्णामंशानामभावः शिबिरपाठ्यक्रमे दृश्यते । अस्य कारणं किमिति प्रश्नस्य समाधानं तु - 'सरलसंस्कृतशिबिरपाठ्यक्रमस्य सरलसंस्कृतकल्पनायां ते अंशाः न अनिवार्याः। अतः ते अंशाः शिबिरपाठ्यक्रमे न निक्षिप्ताः इति।

किं नाम सरलसंस्कृतम् ? किं तस्योद्देश्यानि, कथं च तेन व्यवहारनिर्वहणम् इति ज्ञायते चेत् उपर्युक्तो विषयः स्पष्टः भवति ।श्रवणादिना क्रियमाणः अभ्यासक्रमः भाषाभ्यासस्य सहजक्रमः भवति । अद्यतनसंस्कृतशिक्षणे (व्याकरणानुवादपद्धतौ पाठ्यपुस्तकपद्धतौ च) श्रवणभाषणयोः सुष्ठु अभ्यासो न भवति । वस्तुतः 'सरलसम्भाषणविधिः' व्याकरणानुवादपद्धतिं विरुद्ध्य कृतस्य परिश्रमस्य फलम् इत्येव वक्तुं युक्तम् । शिबिरविधौ तु श्रवणभाषणादिना एव भाषाभ्यासः भवति । अतः एषः विधिः संस्कृतभाषाभ्यासस्य अत्युत्तमः विधिः ।अपि च, सर्वा अपि संस्कृतेतरभाषाः तत्तद्भाषामाध्यमेन पाठ्यन्ते,सम्भाषणमाध्यमेन पाठ्यन्ते, तासां पाठनस्योद्देश्यतया संस्कृतभाषया व्यवहारसामर्थ्यसम्पादनम्' इत्यपि एकः अंशः भवति । अतः अद्य बहुभ्यः वर्षेभ्यः कृतस्य परिश्रमस्य साम्प्रतिकी स्थितिः फलस्वरूपेण दृश्यते।

**अद्य संस्कृतभारती नाम –**

१.संस्कृतद्वारा भारतस्य नवनिर्माणार्थं क्रियमाणमेकमान्दोलनम् (उद्यमः)।

२.संस्कृतनिमित्तं स्वयंसेवाभावनया कार्यं कुर्वतां सङ्घटनम् ।

**संस्कृतभारत्या सिषाधयिषितांशाः**

१. संस्कृतं जनभाषा भवेत् । दैनिकव्यवहारे उपयुक्तं स्यात् ।

२.संस्कृतद्वारा समाजे समरसता एकता च सम्पादनीया।

3. संस्कृतद्वारा भारतस्य सांस्कृतिकपुनरुज्जीवनम् ।

४. संस्कृते निहितस्य ज्ञानस्य विज्ञानस्य च समाजोपयोगितासम्पादनम् ।

राष्ट्रोत्थानाय, संस्कृतेः पुनरुज्जीवनाय, वैदिकभाषायाः नित्यव्यवहाराय इयं जनभाषा अवश्यं भवेत्। जयतु संस्कृतम्। जयतु मनुकुलम्।

**********

## सन्दर्भग्रन्थसूची -


1. संस्कृतभारती- च.मू.कृष्णशास्त्री
2. संस्कारबिन्दुः – संस्कृतभारती
3. संस्कृतं वदतु – संस्कृतभारती
4. कौशलबोधिनी – डा.विश्वासः
5. **samskritabharati.in**

# प्रज्ञानखण्डः

## शास्त्रशिक्षणविधयः शास्त्रसंरक्षणोपायाश्च

**गान्धिवर्गः**

**परियोजनाकार्यस्य मार्गदर्शकः**

**डॉ. देवदत्तसरोदे**

**परियोजनाकार्यस्य सदस्याः**

1. प्रियदर्शिनी राउत 2. प्रियरञ्जन आचार्यः
3. नमिता राजः 4. मितालि मधुस्मिता मिश्रः
5. मोनालिसा दाशः 6. रुपालिता बारिक

**प्रस्तावना** –

भारतीयपरम्परायां धर्माधर्मयो: सदसतो: कर्त्तव्याकर्त्तव्ययो: विवेकं कर्तुं श्रुतिस्मृतिशास्त्रप्रमाणान्यन्तरेण नास्त्यन्यच्छरण्यम् अत एव एवंजातीयकं प्रमाणभूतं शास्त्रम् अस्मत्संस्कृते: जीवातुभूतं वरीवर्ति। शास्त्राणि नैकानि सन्ति, तद्यथा – व्याकरणशास्त्रं, निरुक्तशास्त्रं, योगशास्त्रं, धर्मशास्त्रं, ज्योतिषशास्त्रं, गणितशास्त्रम्, इत्यादीनि। एतेषां शास्त्राणां शिक्षणपरम्परा अतिप्राचीनकालाद् अजस्रम् अनुवर्तते। तत्र शास्त्रशिक्षणेन शास्त्रस्यैषा परम्परा रक्षिता भावति , किञ्चानेन शास्त्रज्ञानेन ऐहिकामुष्मिकफ़लावाप्तये सौकर्यं भवति। अपि च – ज्ञानं मनुजस्य तृतीयं नेत्रम् इति उक्तत्वात् नहि ज्ञानेन सदृशं पवित्रमिह विद्यते इति गीता वचनेन ज्ञायते यत् भारते ज्ञानमेव सदा सर्वथा मूर्धनि विराजते। ज्ञानमयानि इमानि शास्त्राणि तेषां शिक्षणपरम्परा प्राणपणेन रक्षिता संवर्धिता च परन्तु गच्छता कालेन सैषा शिक्षणपरम्परा तस्या: गुणवत्ता च अनुदिवसं क्षीयमाणा विलोक्यते। अत: शास्त्रशिक्षणविधय: के ? शास्त्ररक्षणोपायाश्च के इति तदत्र विचार्यते।

**शास्त्रस्य परिभाषा**

**शास्ति यत् साधनोपायं पुरुषार्थस्य निमित्तम् ।**
**तथैव बन्धनोपायं तत् शास्त्रम् इति कथ्यते ।।**

धर्मार्थकाममोक्षादीनां पुरुषार्थचतुष्टयस्य सम्प्राप्त्यै उपायं बोधयति, सर्वदु:खबन्धनेभ्यो मुक्तये उपायं सूचयति तच्छास्त्रम् इत्युच्यते ।

अथवा कुमारिलभट्ट: शास्त्रमेवमाह -

**प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा ।**
**पुंसा येनोपदिश्यते तच्छास्त्रमभिधीयते ।।**

धर्मादिसत्कार्येषु प्रवृत्तिः, अधर्मादिनिषिद्धकर्मभ्यो निवृत्तिः , एतदर्थप्रयत्नविशेष: उपदेशविशेषो वा नित्येन नाम अपौरुषेयवेदै: , कृतकेन वा- वेदानुवर्तिशास्त्रै: (मुनिभि: ऋषिभि: ,आचार्यै: रचितानि - धर्मादिशास्त्राणि ) एभि: जना: उपदिश्यन्ते , तदेतच्छास्त्रम् इत्यर्थ: । अथवा विहितकर्मसु

प्रवृत्ति:निषिद्धकर्मभ्यो व्यावृत्ति: यै: वाक्यै: पुंसा उपदिश्यते तच्छास्त्रम् । शास्त्रशिक्षणं नाम - पूर्वोक्तस्य शास्त्रस्य शिक्षणम् शास्त्रशिक्षणम् इति षष्ठीतत्पुरुषसमास:।

**शास्त्रप्रयोजनम्-**

प्रयोजनमनुद्दिश्य मन्दोऽपि न प्रवर्तते इत्युक्तदिशा सर्वेषामपि शास्त्राणां, ग्रन्थानां प्रयोजनमस्तित्यतः शास्त्रेषु सर्वेषु आस्तीकानां प्रवृत्तिः। शास्त्राणां प्रयोजनं सामान्यतः साध्वसाधुज्ञानं, कर्तव्याकर्तव्यज्ञानं, विहितनिषिध्दयोःज्ञानं, ग्राह्याग्राह्ययोःज्ञानं, तत्त्वानां ज्ञानं, सकलचराचरवस्तूनां लक्षणज्ञानं च विद्यते। विशेषेण-व्याकरणशास्त्रस्य प्रयोजनम्- रक्षोहागमलघ्वसंदेहा: प्रयोजनम् इति । साहित्यस्य प्रयोजनम्- काव्यं यशसे अर्थकृते व्यवहारविदे शिवेतरक्षतये सद्यःपरनिर्वृत्तये कान्तासंमिततयोपदेशयुजे । न्यायशास्त्रस्य प्रयोजनम् – तत्त्वानां ज्ञानसम्पादनम् । मीमांसाशास्त्रस्य प्रयोजनम् –धर्माधर्मयोः विवेकप्राप्तिः। वेदान्तस्य प्रयोजनम् – ब्रह्मज्ञानसम्पादनम् । ज्योतिषस्य प्रयोजनम् -कालज्ञानसम्पादम्। एवमन्यशास्त्राणां प्रयोजनानि वेदितव्यानि ।

**शास्त्रम् अष्टादशविधम् -**

**अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।**
**धर्मशास्त्रं पुराणञ्च विद्याः ह्येताः चतुर्दश ॥**

**आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः ।**
**अर्थशास्त्रं चतुर्थञ्च विद्याः ह्यष्टादश एताः ॥**

शास्त्रम् अष्टादशविधम्

1- शिक्षा, 2- कल्प:, 3- निरूक्तम्, 4- छन्दः, 5- ज्योतिषम्, 6- व्याकरणम्,
7- न्याय:, 8- मीमांसा, 9- धर्मशास्त्रम्, 10- पुराणम्,
11- ऋग्वेद:, 12- सामवेद:, 13- यजुर्वेद:, 14- अथर्ववेद:,
15- आयुर्वेद:, 16- धनुर्वेद:, 17- गान्धर्ववेद:, 18- अर्थशास्त्रम् ।

**व्याकरणशिक्षणविधयः** -

वेदाङ्गेषु प्रधानं व्याकरणं न केवलं वेदमन्त्रेषु विद्यमानानां अर्थावबोधनं करोति परं तु तेषां रक्षणमपि करोति । व्याक्रियन्ते – व्युत्पाद्यन्ते शब्दाः अनेनेति व्याकरणम् । व्याकरणशिक्षणपद्धतिषु 1. परम्परागतविधि:, 2. निगमनविधि:, 3. आगमनविधि:, 4.समस्याविधिः , 5. व्याख्याविधिः 6. ह्यूरिष्टिकविधिः 7. प्रयोजनविधिरिति बहवोः विधयः प्रयुज्यमानाः वर्तन्ते ।

1. **परम्परागतपद्धति**: – परम्परागतशिक्षाव्यवस्थायां ये विधयः प्रयुक्ताः आसन् । ते च

परम्परागतविधिनाम्ना ज्ञायन्ते । इयं पद्धतिः पुराकालात् प्रचलति । मठेषु, गुरुकुलेषु , आश्रमेषु ,परिवारेषु चानयैव पद्धत्या शिक्षा प्रदीयते । अस्यां पद्धतौ सूत्रविधि:, प्रतिपदपाठविधि:, वार्तिकविधि:, वृत्तिविधि:, भाष्यविधि:, इत्यादय: बहवो विधयः प्रयुज्यमाना आसन् सन्ति च। पुरा अध्यापनं मौखिकमेवाधिकमवर्तत । एतान् अतिरिच्य केचन विधय: आधुनिककाले आधिक्येन प्रयुज्यमाना: विद्यन्ते ते च अधस्तात् प्रस्तूयन्ते

**2.आगमनविधि**:- लक्ष्यं प्रदर्श्य लक्षणपरिकल्पनं नाम आगमनम् । उदाहरणानि प्रस्तूय ततो नियमनिर्धारणं नाम आगमनम् । आगमनविधेः सोपानानि – 1.उदाहरणप्रस्तावः 2. निरीक्षणम् 3. नियमनिर्धारणम् , 4. पाणिने: सूत्रेण सह तुलना 5. परीक्षणम् ।

3. **निगमनविधिः** - लक्षणात् लक्ष्यं प्रति गच्छति निगमनविधिः, निगमनविधिना शिक्षणे प्रथमं परिभाषा नियमो वा पाठ्यते । ततः सावधानमर्थं व्याख्याय , प्रयोगान् प्रदर्श्य तत्वानि स्पष्टीक्रियन्ते। निगमनविधेः सोपानानि 1.नियमः 2.स्पष्टीकरणम् 3. प्रयोगप्रदर्शनम् 4. पुनःपरीक्षणम् ।

4. **समस्याविधिः** –समस्याविधिर्न नवाविष्कृतः, प्राचीनभारते बहुत्रास्य प्रयोगः दृश्यते । पञ्चतन्त्रे , हितोपदेशे समस्याविधे: प्रयोग: भूरिशो दृश्यते तद्यथा । उपायेन हि यच्छक्यं तन्न शक्यं पराक्रमैः। काक्या कनकसूत्रेण कृष्णसर्प: निघातित: ॥ असाधनाऽपि प्राज्ञा बुद्धिमन्तो बहुश्रुताः. साधयन्त्याशु कार्याणि काकाखुमृगकूर्मवत् ॥ इत्यादय: ...समस्याविधिः क्रमबद्धमेकं प्रशिक्षणसाधनं भवति । समस्याविधेः सोपानानि – 1. समस्या 2. समाधानान्वेषणप्रक्रिया 3.परिकल्पना 4.समाधानम् इति।

5. **व्याख्यानविधिः** – शास्त्राणां सम्यग् अर्थप्रतिपत्तये वृत्तिर्व्याख्यानमनिवार्यम्। भाष्यकार: महाभाष्ये प्राह *व्याख्यानतो विशेषप्रतिपत्तिर्नहि संदेहादलक्षणम्* इति

तथा च व्याख्यानस्य लक्षणम् –

**पदच्छेदः पदार्थोक्तिः विग्रहो वाक्ययोजना ।**
**आक्षेपोऽथ समाधानं व्याख्यानं षड्विधं मतम् ।।**

सूत्राणां पदच्छेदं विधाय पदार्थं संबोध्य समासविग्रहं विधाय अर्थप्रतिपत्तिं कृत्वा पदानि यथाक्रमं सार्थकं संयोज्य तद् गतार्थं प्रतिपाद्य तदुपरि पूर्वपक्षरूपेणाक्षेपं विधाय तस्य समाधानं कृत्वा निश्चितसिद्धान्तस्थापनम् अर्थनिष्पति: व्याख्यानं भवति। एवं षड्भिरुपायैः साधनैः सूत्रार्थः सूत्रव्याख्यानं वा कार्यम्।

6. **ह्यूरिष्टिक्विधिः** – ह्यूरिष्टिक् इति पदं ह्यूरिष्को इति ग्रीक् शब्दात् विकृतं वर्तते । तस्यार्थः अहमन्विष्यावगच्छामि इति । अस्मिन् विधौ छात्राः स्वयमेव तत्त्वमन्विष्य अवगच्छन्ति । अध्यापकः तदर्थं व्यवस्थापयति स तु केवलं मार्गदर्शकत्वेन कर्म करोति न तु सर्वं शिक्षयति । छात्रेभ्यः तत्त्वानाम् अवलोकनार्थं निरीक्षणार्थं चावसरं परिकल्पयति ।

7. **प्रयोजनविधिः** – प्रयोजनविधिः बहुकालात् व्यवहारे वर्तते। प्रयोजनविधिः योजनाविधिरिति शब्दावनर्थान्तरे प्रयुज्येते । अस्माकं वेदेषु, उपनिषत्सु , इतिहासे, पुराणेषु च प्रयोजनविधेः संसूचना: प्राप्यन्ते। अर्वाचीनकाले प्रयोजनवादमाधारीकृत्य किल प्याट्रिक महोदयेन प्रवर्तितोऽयं विधि:। अत्र इमानि सोपानानि भवन्ति .. ...

१. परिस्थिते: निर्माणम् , २.योजनाया: चयनम् , ३. कार्यक्रमनिर्माणम् , ४. कार्यान्वय:, ५. योजनाया: लेखनम्, ६. मूल्याङ्कनम्

**साहित्यशिक्षणविधयः**

साहित्यशिक्षणविधयःषट्प्रकारकाःसन्ति। तद्यथा-

1. परम्परागतविधिः
2. दण्डान्वयविधिः
3. खण्डान्वयविधिः
4. टीकाविधिः
5. अनुवादविधिः
6. अभिनयविधिः

**1. परम्परागतविधिः-** (Traditional Method) -

अयं शिक्षणविधिः पाठशालासु, आश्रमेषु, गुरुकुलेषु, मठेषु विद्यापीठेषु च प्रचलितः आसीत् । अनेन विधिना शिक्षारम्भः उपनयनसंस्कारात्परं भवति स्म । गुरूः छात्रान् गायत्रीमन्त्रस्य उपासनार्थमुपदिशति स्म। छात्रःप्रतिदिनं नित्यकर्मसम्पादनानन्तरं गुरोः समीपं गत्वा निवेदयति स्म "सम्माननीया: श्रावयन्तु" । छात्रः उत्तराभिमुखोभूत्वा गुरोः समीपे विद्यां प्राप्नोति स्म। तस्मिन् काले गुरुशिष्यसम्बन्धः पितापुत्रवत् आसीत्। पुरा शिक्षणस्य स्थाने मानवस्य जीवनशैल्या-आचारविचारयोः विशिष्टं बलं दीयते स्म। वौदिककाले तथा च पाश्चात्यशिक्षापद्धत्याःआगमनात्परं संस्कृतशिक्षणाय ये विधयः प्रयुज्यन्ते ते सर्वे प्राचीनविधीनामन्तर्गत एव विधीयन्ते।

**2. दण्डान्वय-पद्धतिः -**

गद्यम् अन्वयं विना पाठयितुं शक्यते पद्यन्तु न तथा । गद्ये कर्म, क्रिया च क्रमशः भवन्ति, पद्ये न तथा भवन्ति। भावावगाहनाय कर्तृकर्मक्रियादीनां कश्चनक्रमः आवश्यकः। ईदृशक्रमज्ञानाय अन्वय आवश्यकः। एतदर्थं श्लोके विद्यमानं प्रधानं वाक्यमन्वेषणीय्रम्। प्रधानवाक्यस्यान्वेषणानन्तरं कर्तृकर्मक्रियादीनां ज्ञानमावश्यकम्। तदनन्तरं क्रियाविशेषणानि अव्ययानि च योजनीयानि। एवंरीत्या कर्तृकर्मक्रियादीनां माध्यमेन यत्राध्यापनं भवति तत्र दण्डान्वयपद्धतिराश्रिता इति वक्तुं शक्यते।

यथा- **उष्ट्राणां विवाहेषु गीतं गायन्ति गर्दभाः।**

**अन्योऽन्यं प्रशंसन्ति अहोरूपमहो ध्वनिः।**

**आद्ये विशेषणं योज्यं विशेष्यं तदनन्तरम्।**

**क्त्वाणमुल्ल्यप्प्रभृत्येवं पूर्वं दण्डान्वये भवेत्।।**

अस्यां पद्धत्यां व्याकरणस्य प्रधानं स्थानमस्तीति अत्र कर्त्ता-कर्म-विशेषण-विशेष्य-प्रभृतीनि उन्नतस्तरे विद्यमानाःछात्राः एव अनुस्मर्तुं प्रभवन्ति। अतः लघुबालकानां कृते अनुपयुक्ता एषा प्रणाली ।

**3. खण्डान्वयपद्धति:-**

खण्डान्वयपद्धत्याः नामान्तरमस्ति यत्प्रश्नोत्तरविधिरिति। दण्डान्वयपद्धतेरपेक्षया एषा पद्धतिः उत्तमा अनया मनोरंजकतया प्रभावोत्पादकतया च कवितां शिक्षयितुं शक्यते। मनोविज्ञानसिद्धान्ताधारिता इति हेतोः छात्राः अपि अध्ययने आसक्तिं प्रदर्शयेयु: अत्र ।इयम् दण्डान्वयप्रणाल्याः विपरीततया स्यात्।

**खण्डान्वयस्य परिभाषा**-

**कर्तृकर्मक्रियास्तावत्श्लोके योज्यास्ततःपरम्**

**किमोरूपं पुरस्कृत्य तृतीयादि नियोजयेत्।**

**"ल्यबन्तञ्च तुमन्तञ्च क्वान्तं कर्मविभूषितम्।**

**खण्डान्वये पुनःप्रश्नं पूर्वमन्ते प्रयोजयेत्।**

अस्यां पद्धत्यां प्रश्नोत्तराणां विशेषमहत्वं भवति। चितानां प्रश्नानां समाधानद्वारा श्लोकस्य भावं प्रकाशयितुं शक्यते। खण्डान्वयप्रणाल्याःश्लोक-शिक्षणे सूक्ष्मात्सूक्ष्मभावग्रहणं काव्यगतसौन्दर्यनुभूति: एवं च रसास्वादनं भविष्यन्ति।

**4. टीकाविधि: - (Commentary Method)**

टीकृगतौ इति धातोः "गुरोश्चहलः"(3.3.303) इतिसूत्रेण 'अ'प्रत्ययकृते टीकाशब्दः सिद्ध्यति। 'टीक्यते गम्यते अर्थःअनया इति टीका'' टीकयति गमयति इति टीका'। टीकाविधिरयं गद्यपद्यानां व्याख्यानावसरे संस्कृतसाहित्ये प्राचीनकालात्प्रचलितो अस्ति। यथा–प्रसिद्ध-टीकाकाराःमल्लिनाथः–हेमचन्द्राचार्यः-चर्चितः विद्यते, किं च अस्मिन्विधौ कोशविधिः, प्रयोगविधिः, व्युत्पत्तिविधिः तुलनाविधिश्चेत्यादिविधीनाम् आवश्यकतानुसारं प्रयोगः सम्भवति।

अमरकोशस्य टीकायां सुगमानं (सुषमाणं) विषमाणं च व्याख्या यस्यां सा टीका इति वर्णितः, येन स्पष्टो भवति यत्"व्याख्यायाःविशिष्टरूपमेव टीका"शब्देन कथ्यते। काव्यप्रकाशस्य टीकायां भोजराजः कथयति-

**दुर्बोधं यदतीव तद् विजहति स्पष्टार्थमित्युक्तिभिः,**

**स्पष्टार्थेष्वतिविस्तृतिं विदधति व्यर्थैःसमासादिकैः।**

**अस्थानेऽनुपयोगिभिश्च बहुभिर्जल्पैःभ्रमं तन्वते,**

**श्रोतॄणामिति वस्तुविप्लवकृत: सर्वेऽपि टीकाकृतः।।**

**5. अनुवादविधिः -**

विधिरयं अर्थबोधविधिरिति नाम्ना अपि कथ्यते। एतदनुसारम् अध्यापकः कमपि श्लोकं स्वयमेव पठित्वा अर्थं कथयति अथवा छात्रद्वारा श्लोकस्य स्वयमेव साहाय्यं कुर्वन् मातृभाषायाम् अर्थं कथयति। पूर्वं श्लोके आगतानां कठिन-शब्दानां मातृभाषायाम् अर्थमपि करोति। प्रथमस्तुपाठविषयस्य प्रत्येकं-शब्दस्य मातृभाषायामनुवादः कर्त्तव्यः। ततः सम्पूर्णस्य वाक्यस्य अनुवादप्रस्तुतिःभवति। अस्यां प्रणाल्यां छात्राणां कृते इदम् अत्यावश्यकम्भवति यत्शब्दानामनुवादं मनसि निधाय,अनुवादस्य साहाय्येन श्लोकस्य गद्यखण्डस्य च अवबोधःविधातव्यः। पद्यानामनुवादानन्तरं अध्यापकःछात्रद्वारा अनुवादं कारयति। अयं विधिः पाठ्यक्रमस्य पूरणार्थं स्वीकृतो अस्ति।

**6. अभिनयविधिः-**

रूपकशिक्षणे, कथाशिक्षणे, च अभिनयविधिः प्रशस्ततरः। गीतविधेःएव विकसितं रूपम्अस्ति। संस्कृत-साहित्ये कतिपयबालगीतानि अभिनय-प्रधाना: भवन्ति। छात्राणाम् अपि अभिनये अभिरुचिःभवति। अध्यापकःउचित-हावभावसहितं कथायाःवाचनं करोति तथा छात्रान् पात्रानुसारं वाचनस्य कृते आदिशति। अस्मिन्विधौ अध्यापकः छात्रेभ्यः नाटकस्य भूमिकां प्रददाति, छात्राः स्वस्वभूमिकानुसारं नाटकस्य वाचिकाभिनयं कुर्वन्ति।

**दर्शनशिक्षणविधयः**

"दृश्यते ज्ञायते विचार्यते अनेन इति दर्शनम्। दर्शनशब्दः अयं संस्कृतस्य प्रेक्षणार्थकाद् दृश् धातोः ल्युट् प्रत्यये कृते दर्शनम् इति सिद्धम्। येन साधनेन इदं विश्वम् इदं वस्तुजातं ब्रह्मजीवात्माप्रकृतिश्च याथातथ्येन दृश्यते निरीक्षते परीक्ष्यते समीक्ष्यते विविच्यते च यत्र तद् दर्शनम्। दर्शनम् इत्यस्य आङ्ग्लपदं भवति Philosophy इति। इदं च Philosophy इति पदं युनानी (Greek ) Philos, Sophia इति पदद्वयेन निष्पन्नम्। यस्य च अर्थः- Philos-Love, Sophia-Wisdom भवति। एवञ्च सारांशः रूपेण वदामः चेत् 'Love of wisdom"विद्यानुरागः इति दर्शनस्य अर्थः भवति।

केचन दार्शनिकाः वदन्ति यत्-Philosophy इति पदं लैटिन भाषातः Phil+Sophy इति पदद्वयं स्वीकृत्य आगतम् अस्ति। यस्यार्थः-Phil-Principle तत्वम्, sophy-science शास्त्रम् इति भवति। एवञ्च Philosophy इत्यस्य अर्थः तत्वशास्त्रम्। तत्वविज्ञानम् Principles of science इति।

दर्शनं सामाजिकचेतनायाः रूपमस्ति। अत्र व्यक्तित्वस्य बोधस्य च साधारणविधीनां विषये चिन्तनानां व्यक्तीनां च सम्बन्धे संकल्पाः सन्ति। इदं दर्शनम् एकप्रकारकं विज्ञानमस्ति। परमिदं विशिष्टप्रकारकं विज्ञानं वर्तते। यः प्रकृतेः समाजस्य च विचारणीयविधीनाञ्च अध्ययनं करोति।

एतदर्थम् अस्य मुख्यानि सामाजिकप्रकरणानि विशिष्टैः विज्ञानैः सह तुलनां कृत्वा सम्यक् प्रकारेण विचारणीयानि सन्ति।

दर्शनं द्विविधं आस्तिकं नास्तिकं चेति। अस्ति वेदप्रामाण्यम् अस्ति ईश्वरः वा इति मतिर्यस्य सः आस्तिकः। वैदिकदर्शनम् अस्ति आस्तिकदर्शनस्य अन्यनाम। आस्तिकदर्शनं षड्विधम् अस्ति यथा

१.न्यायदर्शनम् २.वैशेषिकदर्शनम् ३.सांख्यदर्शनम् ४.योगदर्शनम् ५.पूर्वमीमांसादर्शनम् ६. उत्तरमीमांसादर्शनम्।

नास्ति वेदप्रामाण्यं नास्ति ईश्वरो वा इति मतिर्यस्य सः नास्तिकः। अवैदिकदर्शनं भवति नास्तिकदर्शनस्य अन्यनाम। नास्तिकदर्शनमपि षड्विधम् अस्ति। यथा-१.चार्वाकदर्शनम् २.जैनदर्शनम् ३. बौद्धदर्शनस्य चत्वारः भागः यथा (क). वैभाषिकाः (ख) सौतान्त्रिकाः (ग) योगाचाराः (घ) माध्यमिकाः

दर्शनशिक्षणे अपि केचन विधयः सन्ति। अत्र जिज्ञासा जायते यद् दर्शनशिक्षणस्य प्रयोजनं किम्?

1.आत्मसम्बन्धिततत्त्वज्ञानम्(Metaphysics of the Soul)

2.ईश्वरसम्बन्धिततत्त्वज्ञानम्(Theology)

3. सृष्टिशास्त्रम्(Osmology)

4.विश्वविज्ञानम्(Cosmology)

5.सत्ताशास्त्रम्(Ontology)

6.ज्ञानशास्त्रम्(Epistemology)

7.नीतिशास्त्रम्(Ethics)

8.सौन्दर्यशास्त्रम्(Aesthetics)

9.तर्कशास्त्रम्(Logic)

एतद् सर्वं तत्वानां ज्ञानार्जनाय दर्शनशास्त्रस्य आवश्यकताऽस्ति।

दर्शनशिक्षणे ये विधयः सन्ति तेषां नामानि भवन्ति यथा-

क.विकासविधिः(Developmental)

ख. इतिहासविधिः (Historical Method)

ग. समस्याविधिः {Problem (Solving) Method}

घ. निदर्शनविधिः (Illustrative Method)

ङ ह्युरिस्टिक् विधिः (Heuristic Method)

**क. विकासविधिः-** प्रथमविधिः अस्ति विकासविधिः। इन्द्रियजनितज्ञानं यथार्थवादस्य आदर्शवादस्य च तृतीयस्वरूपं विकासविधिः वर्तते। अयं विधिः निगमनविधेः स्थानोपरि आगमनविधिम् उपस्थापयति। सत्यस्य अन्वेषणं तु सामान्यसिद्धान्तमाध्यमेन इन्द्रियजन्यविशेषदशायां प्रवर्तितम्। येषु तथ्यान्याधृत्य सिद्धान्तस्य निर्माणं भवति। इन्द्रियद्वारा शिक्षणे 'सरलात् कठिनं प्रति' शिक्षणसूत्रस्य उपयोगिता भवति। John Amos Comenius महोदयः The great didactic इति स्वपुस्तके लिखति- The ultimate end of man is eternal happiness with God. मानवजीवनस्य चरमलक्ष्यं ईश्वरेण सह अनन्तस्य

आनन्दस्य प्राप्तिः वर्तते। स्वानुभवेन तथ्यज्ञानार्थम् अयं विधिः सामाजिकोत्थाने अनन्तसहायको भवति। विकासविधेः प्रबोधने पञ्चावयवाः सन्ति। यथा-

१.प्रतिज्ञा(Proposition) "साद्ध्यनिर्देशः प्रतिज्ञा" साधककर्तुयोग्यः धर्मविशिष्टधर्मी इति बोधकवाक्यविशेषः प्रतिज्ञा। यथा-पर्वतोवर्ह्निमानिति। धर्मः-धूमः, धर्मी-अग्निः।

२.हेतु(Cause) "धूमवत्त्वादिति हेतौ"। अर्थात् साधनीयपदार्थस्य साधनतत्त्वबोधकवाक्यविशेषः हेतुः इति कथ्यते। यथा-धूमः।

३.उदाहरणम्(Example) -" यो यो धूमवान् सः सः वह्निमान् यथा महानसम् इति उदाहरणम् "। व्याप्ति प्रतिपादकं वचनम् उदाहरणम्। साध्येन साधर्म्यं समानधर्मता साध्यसाधर्म्यात् कारणात् तद्धर्मभावो दृष्टान्तः एव उदाहरणं भवति।

४.तुलना(comparison) (उपनयः) -" तथा चायमित्युपनयः" उदाहरणापेक्षः तथेत्युपसंहारौ न तथेति वा साध्यस्य उपनयः। धर्ममाधेयः धर्मी आधारः।

**ख. इतिहासविधिः-** छात्रेभ्यः भाषायाः विकासः वर्णनप्रणालीमनुसृत्य बोध्यते। तस्याः महत्त्वं पुराकाले समाजस्य दर्शनविषयकधारणा कीदृशी आसीत् इति सर्वम् इतिहासरूपेण पाठ्यते। येन छात्राः सम्प्रेरिताः दर्शनतत्त्वं सोत्साहम् अधिगच्छन्ति ।

**यथा-**

**" *द्वा सुपर्णा सयुजा सखाया* समानं वृक्षं परिषस्वजाते।**
**तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति॥**

**ग. समस्याविधिः-** कस्यापि काठिन्यम् कस्याश्चित् जटिलतायाः वा सन्तोषजनकः समाधानान्वेषणार्थं क्रियमाणः योजनाबद्धः कार्यक्रमः एव समस्यासमाधानविधिः। आलोचनात्मकं चिन्तनमेव समस्यासमाधानं भवति। समस्याविधेः कानिचन सोपानानि सन्ति।

यथा-

१.समस्या २.समाधानान्वेषणप्रक्रिया ३.परिकल्पना ४.समाधानम्

**घ. निदर्शनविधिः-** निदर्शनशब्दस्यार्थः भवति" अर्थप्रकाशनं भावस्पष्टीकरणम् च" दर्शनशिक्षणे निदर्शनम्(दृष्टान्तस्य) यस्मिन्नर्थे बुद्धि साम्यं सः दृष्टान्तः इति अङ्गीक्रियते।

निदर्शनस्य प्रकारः भवति द्विविधम्

क. मौखिकः ख. प्रदर्शनात्मकश्च

**ङ. ह्यूरिस्टिक् विधिः-** "मितं भाषेत बहु कुर्वीत" इति सिद्धान्तम्"अध्यापकाः छात्रान् अत्यल्पमेव पाठयेयुः अत्यधिकं अन्वेषणे प्रोत्साहयेयुः" इति ।Herbert Spencer महोदयस्य हरबर्टीय सिद्धान्तं चाधारीकृत्य प्रो. एच. ई. आर्मस्ट्रांगमहोदयः नवदशशताब्द्यां विज्ञानविषय शिक्षणार्थम् अमु विधिं पर्यकल्पयत् । इत्थं कतिपयाः शास्त्रशिक्षणविधयः सारसंक्षेपेण प्रस्तुताः, इदानीं शास्त्ररक्षणोपाश्च प्रस्तूयन्ते ……

**शास्त्रसंरक्षणोपायाश्च -**

भारतीयपरम्परायां प्राचीनकालादारभ्य अद्यावधि मानवस्य मानवमूल्यानि संरक्षितुं मानवत्त्वेन व्यवहर्तुं धर्मस्य दीपस्तम्भा: इव वेदा: शास्त्राणि च विराजन्ते। परन्तु गच्छता कालेन, वेदा: शास्त्राणि तेषां परम्परा च अनुदिवसं क्षीयमाणा परिलक्ष्यते। तद्यथा भाष्यकार: पतञ्जलि: वेदस्य शाखा: परिगणयति ''एकशतम् अध्वर्युशाखा: सहस्रवर्त्मा सामवेद: एकविंशतिधा बाह्वृच्यम्, नवधा आथर्वण:'' (म.भाष्य. पस्पशा.) इति आसु वेदशाखासु अद्यत्वे कतिपया: एव उपलभ्यन्ते अन्ये नष्टा: क्षीणाश्च अभवन्।

शास्त्रसंरक्षणं भवेत् इति भाष्यकार: व्याकरणप्रयोजनेषु एवमाह ''आगमखल्वपि-ब्राह्मणेन निष्कारणो धर्म: षडङ्गो वेदोऽध्येयो ज्ञेयश्च (म.भाष्य. पस्पशा) ब्राह्मणग्रन्थानामपि परम्परा नष्टा इव प्रतिभाति शतपथब्राह्मणस्य कृत्स्नो विषयो वै तथा स्पष्टो न भवति यथा उपनिषदाम्। निरुक्तपरम्पराऽपि प्राय: नष्टा - यथा अष्टाध्यायीव्याकरणस्य परम्परा प्रथिता तथा निरुक्तपरम्परा नालक्ष्यते।

उपवेदानां धनुर्वेद:, गान्धर्ववेद:, अर्थवेद: इत्यादीनां केवलं प्राकरणिका: विकीर्णा: ग्रन्था विलोक्यन्ते न तु साक्षात् उपवेदा:। श्रौतयागपरम्परा शास्त्रपरम्परा च दिने दिने क्षीयमाणा विद्यते। वैदिकविज्ञानपरम्परा भौतिकं, रसायनं, धातुशास्त्रं, जीवविज्ञानं, वनस्पतिविज्ञानं, कृषि विज्ञानम् ..... शिथिलीभूता, खण्डिता, विकीर्णा इवाभाति।

संस्कृतभाषाऽपि पण्डितसभासु शास्त्रेषु क्वचिद् विपश्चिद्विकाये दरीदृश्यते। इत्थं क्षीयमाणां शास्त्रपरम्परां भाषाञ्च संरक्षितुं संवर्धयितुं कर्तव्य: कश्चन कल्प:।

शास्त्रसंरक्षणाय केचन उपाया: अधस्तात् प्रस्तूयन्ते।

१. परिवारे शास्त्रसंरक्षणम् — प्रत्येकं परिवारे कश्चन, एक: जन: शास्त्रमभ्यसेत् शास्त्रसंरक्षणाय स्वकीयजीवनमपर्ययेत्। यथा — गुरूगोविन्दसिंह: खालसामतं (पन्थ) संस्थाप्य प्रतिकुटुम्बम् एकं जनं धर्मरक्षणाय समप्रेष्यताम् इति आह्वयामास तत्परिणामेन विशालखालसापन्थ: निर्मित:। तद्वत् प्रतिकुटुम्बमेक: जन: शास्त्ररक्षणाय समर्पित: स्यात्।

२. जीवन्ती परम्परा — या कापि परम्परा व्यवहारे भवति । जीवने आचर्यते सा जीवती अन्यथा म्रियते। अत: शास्त्रपरम्परा समाजजीवने व्यवह्रियमाणा स्यात्। तस्या: औचित्यं भवेत् अन्यथा भारभूताया: परम्पराया: परित्याग: कदापि भवितुमर्हति, अत: शास्त्रं समाजजीवने नित्यव्यवहारे भवेत् तदर्थं कश्चन यत्नो विधेय:।

३. मूलग्रन्थानां कण्ठस्थीकरणम् — मूलग्रन्थानां शास्त्राणां कण्ठस्थीकरणस्य परम्परा प्रामुख्येन भवेत्। यथा — वेदानां कण्ठस्थीकरणम्, दर्शनशास्त्राणां कण्ठस्थीकरणम्, अष्टाध्याय्या: कण्ठस्थीकरणम्। यदि बाल्यादारभ्य एवं कण्ठपाठ: कार्यते चेत् पञ्चसु अथवा दशसु वर्षेषु बहूनि शास्त्राणि ग्रन्थाश्च कण्ठस्था: भवन्ति। अनेन मूलग्रन्थानां संरक्षणमपि च अधीतविद्या हस्तामलकीवत् भवति।

४. व्याख्यानग्रन्थानामध्ययनमध्यापनञ्च — शास्त्राणां यानि व्याख्यानानि भाष्याणि भवन्ति

तेषां पठनं पाठनञ्च भवेत्। तदर्थं प्रत्यहं नियतकाले अनिवार्यरूपेण तत्तच्छा-स्त्राणां भाष्याणां व्याख्यानानां अनुशीलनम् अध्यापनञ्च कर्तव्यत्त्वेन अनिवार्यधर्मत्वेन व्रतरूपेण आचरेत्। अनेनोपायेनापि शास्त्राणि तद्व्याख्यानानि संरक्षितानि भवन्ति।

५. मौखिकशास्त्रार्थपरम्परा — सभासु अथवा विद्यालये छात्रपरिषदि अधीतशास्त्राणां मौखिकशास्त्रार्थ: भवेत्। शास्त्रचर्चा शास्त्रप्रस्तुति:, शास्त्रप्रश्नोत्तरी च भवेत्। शास्त्रस्य स्फुटतरं व्याख्यानं परिषदि स्यात्। इत्थं शास्त्रीयक्रियाकलापै: शास्त्रं न केवलं संरक्षितं परं सुपुष्टं समृद्धं संवर्धितञ्च भवति। अनेन शास्त्रेषु छात्राणां प्रावीण्यं भवति। शास्त्रञ्च आत्मगतं भवति।

६. शास्त्राणां भौतिकरक्षणम् —

१. शिलासु शास्त्राणि उत्कीर्णानि भवन्ति चेत् एतादृश्य: शिला यावत् पर्यन्तं स्थास्यन्ति शास्त्राणि भौतिकरूपेण तावत् पर्यन्तं विराजन्ते यथा — अशोकस्य शिलालेखा:।

२. मुद्रितग्रन्थरूपेण अथवा लिखितग्रन्थरूपेण शास्त्रसंरक्षणं भवति। हस्तलिखितग्रन्था:, मुद्रितपुस्तकानि वा चिरकालं यावत् सुरक्षितानि न भवन्ति कालक्रमेण तानि जीर्णानि शीर्णानि नष्टानि च भवन्ति।

३. आधुनिकसाधनेषु यन्त्रेषु शास्त्रसंरक्षणम् — सङ्गणकयन्त्रे हार्डडिस्क मध्ये, सी.डी., डी.वी.डी., पेनड्राइव, इत्यादिषु संग्रहसाधनेषु शास्त्राणि संग्रहीतुं शक्यन्ते परम् अत्रापि यन्त्रदोषे सति संगृहीतं नष्टं भवति झटिति।

७. आत्मसमर्पणं संस्कृतभाषाभिमानं शास्त्रगौरवञ्च — शास्त्रसंरक्षणाय भाषाविकासाय अस्मासु संस्कृतभाषा विषये नितरां अभिमानं स्यात्। एषा प्राचीना, परिष्कृता शास्त्रीया मञ्जुला मधुरा परिनिष्ठिता भाषेति सगर्वं वक्तुं संकोच: मास्तु। केवलं भाषाभिमानेन भाषा रक्षिता न भवति भाषा तु भाषणात् अस्य विकासस्य रक्षणस्य साधनद्वयं भवति कर्णौ मुखञ्च, कर्णाभ्यां संस्कृतश्रवणम्, शास्त्रश्रवणम्, मुखेन शास्त्रव्याख्यानं संस्कृतभाषणम्। यदि संस्कृतभाषा सम्यग् अभ्यस्ता भवति तदानीं शास्त्ररक्षणं सुकरं भवति। शास्त्रविषये आस्मकीना गौरवभावना भवेत्। तद्रक्षणाय आत्मार्पणं कर्तुं सन्नद्धता स्यात्। एकं शास्त्रं मया समीचीनतया संरक्षणीयं इति मनसि निधाय तदर्थं आत्मार्पणं क्रियते चेत् शास्त्रं सुष्ठु रक्षितं भवति। अद्यावधि यानि कानि शास्त्राणि रक्षितानि तानि तपसा विद्यया आत्मार्पणेन सतीषु अपि नाना विपत्सु भारते व्याकरणपरम्परा, वेदपरम्परा अन्यशास्त्रपरम्परा जीवति, तत् विदुषां त्यागफलमेव।

एषा प्रस्तुता सप्तपदी शास्त्रसंरक्षणे नितरां समर्था विद्यते। एभि: उपायै: शास्त्राणि संरक्षितुं प्रभवाम:।

उपसंहारः – भारतीयसंस्कृति: बहुप्राचीना वर्तते । प्राचीनसंस्कृतेः भाषा संस्कृतमपि बहुप्राचीनं वर्तते । संस्कृतभाषायां चत्वारः वेदाः,षड् वेदङ्गानि, उपनिषद:, शास्त्राणि सन्ति । एतेषां शास्त्राणां

संरक्षणार्थं शास्त्रे विविधाः विधयः सन्ति । यथा व्याकरणशास्त्रसंरक्षणार्थं – सूत्रविधिः, प्रतिपदपाठविधिः, वार्तिकविधिः, वृत्तिविधिः, भाष्यविधिः, आगमनविधिः, निगमनविधिः,समस्याविधिः ह्यूरिष्टिक्विधिः ,इत्यादयः विधयः सन्ति । एवं प्रकारेण साहित्यशास्त्रं , दर्शनशास्त्रं , इत्यादिनानाशास्त्राणां संरक्षणार्थं संस्कृतविद्वांसः भिन्न भिन्नविधीनां प्रयोगं कृतवन्तः, कुर्वन्ति ।

प्राचीनकाले गुरवः स्वाश्रमे, मठादिस्थानेषु शास्त्रसंरक्षणार्थं उपायान् मौखिकरूपेण छात्राणां कृते प्रदत्तवन्तः । एवं शास्त्रे निहितं ज्ञानं भोजपत्रेषु ,तांडपत्रेषु च लिखितस्वरूपेण स्थापितवन्तः एवं प्रकारेण पुराकाले शास्त्रसंरक्षणम् अभवत् । परन्तु आधुनिकसमये शास्त्रसंरक्षणार्थं बहवः सर्वकारीयसंस्थाः तथा सर्वकारेतरसंस्थाः कार्यं कुर्वत्यः सन्ति । यद्वारा शास्त्रसंरक्षणं भूत्वा जनानां सततं मङ्गलं भवति ।

**********

**सन्दर्भग्रन्थाः** –

1. अष्टाध्यायी ,सम्पादक: ब्रह्मदत्त जिज्ञासु,रामलाल कपूर ट्रस्ट रेवली , १९९८,हरियाणा
2. काशिका, सम्पादक: आचार्यविजयपालविद्यावारिधि ,रामलाल कपूर ट्रस्ट रेवली , १९९७,हरियाणा
3. पाणिनीयव्याकरणमहाभाष्यम्, भार्गव शास्त्री,चौखम्बा संस्कृत प्रतिष्ठान , १९८७, दिल्ली
4. पाणिनिकालीन भारतवर्ष ,वासुदेवशरण अग्रवाल चौखम्बा विद्याभवन १९९६, वाराणसी
5. संस्कृतशिक्षणम्, डा. उदयशङ्कर झा, चौखम्बा संस्कृत प्रतिष्ठान , २०१०, दिल्ली

**धत्ते श्रियं सृजति कीर्तिमघं लुनीते**
**मित्रत्वमानयति हन्त विरोधिनोऽपि ।**
**यात्यध्वभिः प्रतिपदं सुमनोऽनुकूलैः**
**गौः कामधुक् कमिव नापहरत्यनर्थम् ।।**

राजतरं. 7 /789

# विविधमनोवैज्ञानिकानां मतानुसारं व्यक्तित्वस्य सिद्धान्ताः

भामहवर्गः

**परियोजनाकार्यस्य मार्गदर्शकः**

**डॉ. देवदत्तसरोदे**

**परियोजनाकार्यस्य सदस्याः**

1. सौम्या शाश्वती स्वाईं 2. नमिता पाढ़ी
3. सुमन पाल 4. स्मृतिरञ्जन राउत

**प्रस्तावना -**

मनोविज्ञानम् इति पदम् आङ्गलभाषायाः साइकोलोजी इति पदस्य रूपान्तरणं वर्तते । केषाञ्चन मनोवैज्ञानिकानां मतानुसारं आत्मनः विज्ञानं मनोविज्ञानमिति । अन्ये केचन चैतनस्य विज्ञानं मनोविज्ञानमिति अवादीषु: । फ्रायड्मतानुवर्तिन:मनोविज्ञानं चेतनाचेतनमनसो: समस्तक्रियाणां विज्ञानमिति आहु: । साम्प्रतं बहुभि: मनोवैज्ञानिकै: प्राणिनां व्यवहाराध्ययनाय प्रवृत्तं शास्त्रं नाम मनोविज्ञानमिति स्वीक्रियते ।

मनोविज्ञाने व्यक्तित्वम् एकं प्रधानविषयः वर्तते । व्यक्तिनिष्ठानां सामान्यविशेषगुणानां समष्टिरूपं व्यक्तित्वपदेनाभिधीयते । व्यक्तित्वस्य स्वरूपविषये सिद्धान्ते च बहवः मनोवैज्ञानिकाः प्रयत्नशीलाः आसन् सन्ति च। सर्वे मनोवैज्ञानिकाः विशिष्टमेव तत्त्वं व्यक्तित्वसन्दर्भे निरूपयन्ति । एतेषु सिद्धान्तेषु हिप्पोक्रेटसमहोदयस्य शरीराकृतिसिद्धान्तः , तथा अल्पोर्टमहोदयस्य लक्षणसिद्धान्तः एवं सिग्मन्फ्रायड महोदयस्य मनोविश्लेषणसिद्धान्तः मुख्यः वर्तते ।

**मनोविज्ञानस्य परिभाषा-**

मनोवैज्ञानिकानां मनोविज्ञानम् अधिकृत्य काश्चन परिभाषा अतीव प्रसिद्धाः वर्तन्ते । यथा-----

(1)**कोलेस्निक महोदयस्य मते**—

मानवव्यवहारस्य विज्ञानं मनोविज्ञानम् ।

Psychology is the science of human behavior.

(2) **वारेन् महोदयस्य मते**—

जीवपरिवेशयोः मध्ये परस्परसम्बन्धविश्लेषकं विज्ञानं मनोविज्ञानम् ।

Psychology is the science which deals with the mutual inter-relation between an organism and environment.

(3) **क्रो महोदयस्य मते**—

मानवव्यवहारस्य तथा मानवसम्बन्धानां विज्ञानं मनोविज्ञानम् ।

Psychology is the study of human behavior and human relationship.

(4) **बेरिंग महोदयस्य मते**—

मानवानां स्वभावस्य विज्ञानं मनोविज्ञानम् ।Psychology is the study of human nature.

**(5) स्किन्नर् महोदयस्य मते**—

मनोविज्ञानं जीवनस्य विविधपरिस्थितिषु जीवस्य प्रतिक्रियाणामध्ययनं करोति । जीवस्य सर्वाः प्रक्रियाः समायोजनं,कार्याणि,अभिव्यक्तयः व्यवहारे अन्तर्भवन्ति ।

अतः सर्वेषां मते जीवस्य व्यवहारस्य अध्ययनं मनोविज्ञानम् इति फ़लितम् । तत्रापि जीवस्य चेतन -उपचेतन-अचेतनावस्थासु व्यवहारस्य व्याख्यानं विश्लेषणञ्च मनोविज्ञानेन संभवति । शिक्षामनोविज्ञानं मनोविज्ञानशास्त्रस्यान्यतमा शाखा वर्तते । शिक्षामनोविज्ञानमित्यत्र शिक्षा मनोविज्ञानम् इत्यनयोः द्वयोः पदयोः संयोजनं वर्तते ।

**शिक्षामनोविज्ञानम्--**

शिक्ष् विद्योपादाने इति धातोः **'गुरोश्च हलः'** इति पाणिनिसूत्रेण अ प्रत्यये सति स्त्रियां टापि शिक्षा इति पदं निष्पन्नं भवति । अस्यार्थः भवति विद्याग्रहणम् ।

मनोविज्ञानं नाम जीवस्य व्यवहारस्य अध्ययनं भवति । शिक्षामनोविज्ञानं नाम शैक्षिकपरिस्थितौ जीवस्य व्यवहारस्य अध्ययनं भवति ।

कालेसनिकमहोदयानुसारं – मनोविज्ञानस्य अनुसन्धानानां सिद्धान्तानाञ्च शिक्षाक्षेत्रे प्रयोगमेव शिक्षामनोविज्ञनम् ।

मनोविज्ञाने व्यक्तित्त्वं नाम किञ्चन प्रमुखं तत्त्वम् , शिक्षा नाम परिपूर्णव्यक्तित्त्वस्य विकास: अत: किं नाम व्यक्तित्त्वमिति वेदितव्यम्

**व्यक्तित्वम्**—

शिक्षायाः उद्देश्येष्वन्यतमं वर्तते सम्पूर्णव्यक्तित्त्वस्य विकासः । अतः अध्यापकाः व्यक्तित्त्वस्य अर्थः,सिद्धान्ताः, मापनम् इत्यादीन् विषयान् जानीयु: । व्युत्पत्तिदृष्ट्या वि उपसर्गपूर्वकात् अञ्जू धातो: निष्पन्नं व्यक्तित्वम् इति पदम् ।अत्र व्यक्तिपदेन मानवः अभिमत: । तस्य यो भावो वर्तते असाधारणः स एव व्यक्तित्वपदेनोच्यते । पुनः कदाचित् व्यक्तेः चरित्रस्य नैतिकतायाश्च पर्यायत्वेन व्यक्तित्वशब्दस्य प्रयोगं लोके अवलोकयामः यथा- अयम् उन्नत:, अयम् उत्तमः, अयं दुष्टः,अयं भीरुः इत्यादयः गुणाः अथवा अवगुणा: कस्यचित् मानवस्य व्यक्तित्वं द्योतयन्ति । परन्तु मनोविज्ञानदृष्ट्या एतेष्वर्थेषु व्यक्तित्वपदस्य

प्रयोगः अपूर्ण: वर्तते। यतः पूर्वोक्तेषु सर्वत्र व्यक्तेः कतिपया: एव बाह्यगुणाः अथवा अवगुणाः प्रतिपादिताः। व्यक्तित्वे शारीरिक:,मानसिक: ,सामाजिक: , सांवेगिक: चारित्रिकादय: गुणा: अन्तर्भवन्ति अत: मनोविज्ञानदृष्ट्या व्यक्तित्वम् इति पदं मानवस्य सामान्यविशेषगुणानां समष्टिभूतं समग्रव्यापकभावनार्थे वर्तते।

व्यक्तित्वम् इत्यस्य आङ्ग्लभाषायां Personality इति समानार्थक शब्दः वर्तते । आङ्ग्लभाषायां Personality शब्दः व्यक्तेः बाह्यगुणान् आचारव्यवहारांश्च द्योतयति । वस्तुतः लाटिन् भाषायाः persona इति शब्दात् personality शब्दः निष्पन्नः persona इत्यस्य लाटिन् भाषायां मुखावरणम्(mask) इत्यर्थ: अर्थात् रङ्गमञ्चे विविधाः नटाः आत्मनः स्वभावं गोपयित्वा मुखावरणम् (mask) धृत्वा अन्यव्यक्तीनाम् अभिनयं कुर्वन्ति ।

तथैव नित्यजीवने जनाः वास्तविकव्यवहारं गोपयित्वा भिन्नव्यवहारं प्रदर्शयन्ति । अतः विविधाभिः प्रक्षेपकाप्रक्षेपकपरीक्षाभिः व्यक्तेः गुढव्यवहारं ज्ञान्तुं मनोविज्ञाने प्रयत्न: क्रियते।

**व्यक्तित्वस्य परिभाषाः** –

मनोविज्ञाने अनेकेषाम् अनिर्वचनीयानां मनोवैज्ञानिकतत्त्वाम् विवेचन कृतं वर्तते। एतेषु व्यक्तित्वमन्यतमं वर्तते । व्यक्तित्वपदं बाह्याकृतेः व्यवहारभिव्यक्तेश्च गूढमर्थं धारयति । अतःएव व्यक्तित्वपदस्य परिभाषा अतीव दुष्करा वर्तते। तथापि बहव: मनोवैज्ञानिकाः व्यक्तित्वस्य परिभाषां प्रदत्तवन्तः।

यथा –

**वुड्वर्त महोदयानुसारम्** –

सामाजिकसमायोजनेन प्राप्तव्यवहारविशेषताः एव व्यक्तित्वम् इति कथ्यते ।

Personality is the sum of total behavioral trends .

(manifested in his social adjustment)

**गिल्फोर्ड् महोदयानुसारम्** -

व्यक्तित्वं गुणानां समष्टिस्वरूपं वर्तते ।

Personality is an intergrated pattern of traits .

**अल्पोर्ट् महोदयानुसारम्-**

व्यक्तित्वं कस्यचित् मनुष्यस्य मनोशारीरिकव्यवस्थानां गत्यात्मकसंगठनं वर्तते यत् परिवेशेन सह तस्य अपूर्वसमायोजनं निर्धारयति ।

Personality is a dynamic organization with in the individual of those psycho-

psysical systems that determine his unique adjustment to his environment.

**आर् . वि. केटिल महोदयानुसारम् -**

प्रदत्तपरिवेशे कस्याश्चित् व्यक्तेः व्यवहारस्य भाविकथनमेव व्यक्तित्वमिति वक्तुं शक्यते।

Personality is that which permits a prediction of what a person will do in a given situation.

एताः परिभाषाः कस्यचित् व्यक्तिविशेषस्य शारीरिक–मानसिक-सांवेगिक-सामाजिक-आध्यात्मिकादिगुणान् द्योतयन्ति।

**व्यक्तित्वस्य सिद्धान्ताः-**

व्यक्तित्वमेकः संकीर्णविषयः वर्तते। व्यक्तित्वस्य स्वरूपविषये मापने च बहवो मनोवैज्ञानिकाः प्रयत्नशीलाः आसन्। विशिष्य शिक्षामनोविज्ञाने व्यक्तित्वमापनं प्रधानांशः वर्तते। मापनात्पूर्वमेव व्यक्तित्वसिद्धान्तानां विषये ज्ञातव्यम्। सिद्धान्तानां बाहुल्यं तेषां वर्गीकरणमनिवार्यं भवति।

**व्यक्तित्वस्य सिद्धान्ताः**




**शरीराकृतिसिद्धान्ताः -** व्यक्तेः शरीरकृतिम् आश्रित्य व्यक्तित्वस्य व्याख्यानं कर्तुं बहवः प्रयत्नमकुर्वन्।

अत्र व्यक्तित्वे जैविककारकाणां प्रभावः परिशील्यते। तत्रैते सिद्धान्ताः प्रमुखाःवर्तन्ते।

**हिप्पोक्रेटस महोदयस्य सिद्धान्तः -**

ग्रीसदेशीयः हिप्पोक्रेटस नामकः वैद्यः शरीराकृतिम् आश्रित्य मनुष्याणां व्यक्तित्वस्य व्याख्यानमकरोत्। आकृतिसिद्धान्तप्रवर्तकेषु अयमाद्यः वर्तते।

1. पैत्तिकः(choleric) - अयं शरीरकृत्या दृढः, सांवेगिकरीत्या च दुर्बलः भवति। फलतः अयम् उत्साही,

शीघ्रगामी कर्मठः, असहिष्णुः, क्रोधशीलश्च भवति।

2. श्यामपित्तीयः(Melancholic) - अयं शरीरकृत्या सांवेगिकरीत्या च दुर्बलः भवति। अतः निराशवादी, शक्तिहीनः,दुःखी,विषादशीलश्च भवति।

3. पीतपित्तीयः (Phlegmatic) - अयं शरीरकृत्या दुर्बलः सांवेगिकदृष्ट्या सशक्तः च भवति। अतः अयं अलसः, निद्रालुश्च भवति।

4. सुप्रत्याशी (Sanguine) - अयं शरीरकृत्या दृढः, संवेगात्मकदृष्ट्या स्थिरः च भवति। अतः अयम् उत्साही ,आशावादी ,आत्मविश्वासी भवति।

( ख) **शेल्डन (Sheldon) महोदयस्य वर्गीकरणम् --**

शेल्डन महोदयस्य शरीरसंरचना – व्यक्तित्वयोः सम्बन्धस्य विस्तृताध्ययनम् अकोरत्। सः शरीराकृतिम् आश्रित्य मनुष्याणां त्रिधा विभागमकरोत्। यथा –

1.स्थूलाकृतिः - एते स्थूलाः,कोमलशरीराः,शक्तिहीनाश्च भवन्ति । स्वभावतया भोजनप्रियाः, विश्रान्तिप्रियाः ,परंपरावादिनः, स्नेहशीलाः, सामाजिकाश्च भवन्ति।

2. मध्याकृतिः - शारीरिकदृष्ट्या एते दृढाः स्वस्थाश्च भवन्ति । स्वभावेन एते भयरहिताः साहसिकाः आशावादिनः , प्रभुत्ववादिनः ,उत्साहिनश्च भवन्ति।

3. लम्बाकृतिः - शारीरिकदृष्ट्या इमे कृशकायाः , दीर्घाश्च भवन्ति। एतेषां हस्तपादौ दीर्घौ भवतः,तथा कृशःभवति । स्वभावेनैते निराशवादिनः,एकान्तप्रियाः,अल्पनिद्रालवः,एकाकिनः,असामाजिकाः अल्पकाले श्रान्ताश्च भवन्ति।

(ग) **क्रेश्मर महोदयस्य सिद्धान्तः** -

क्रेश्मर महोदयः मानवानां शारीरिकसंरचनाम् (Physiological structure ) आश्रित्य त्रिधा विभागमकरोत्। यथा –

1. तुन्दिलः - एते स्थूलाः , वामनाः ,कुम्भोदराश्च भवन्ति। एते सामाजिकाः ,विनोदप्रियाः लोकप्रियाश्च भवन्ति।

2.कृशकायाः– इमे उन्नताः, कृशकायाः, कृशोदराश्च भवन्ति। एते लज्जावन्तः,निराशवादिनः,एकान्तप्रियाः भवन्ति।

3. दृढकायाः - इमे बलवन्तः, स्वस्थशरीराश्च भवन्ति । एते सामाजिकाः, आशावादिनः, कार्यव्यस्ताः सुसमायोजिताश्च भवन्ति।

इत्थं शरीराकृतिमाश्रित्य हिप्पोक्रेटस , शेल्डन् , क्रेश्मर् इत्यादयः मनोवैज्ञानिकाः व्यक्तित्वस्य वर्णनाय प्रयत्नमकुर्वन्।

**4. युंगमहोदयस्य वर्गीकरणम्** - युंगमहोदयःमनुष्यस्य सामाजिकगुणानामाधारेण अन्तर्मुखः बहिर्मुखः इति द्विधा विभागमकोरत्।

अन्तर्मुखः – एते आत्मकेन्द्रिताः भवन्ति। सामाजिककार्यक्रमेषु भागं न गृह्णन्ति। एते एकान्तम् इच्छन्ति। इमे मितभाषिणः ,चिन्तनशीलाः भवन्ति । सर्वदा पुस्तक पठने व्यस्ताःभवन्ति । यथा – कवयः,लेखकाः ,दार्शनिकाः,सन्यासिनः,योगिनः,मेधाविनश्च।

बहिर्मुखः - एते सामाजिकाः स्नेहशीलाश्च भवन्ति । सर्वदा परेषां साहाय्यमाचरन्ति । पुनश्चैते सरलस्वभाविनः, धैर्यशालिनः , उत्साहिनः, वाग्मिनश्च भवन्ति। प्रायः एतादृशाः नेतारः भवितुं योग्याः भवन्ति। यथा – समाजसेवकाः, नटाः ,राजकीयनेतारः ,धार्मिकगुरवः इत्यादयः।

परन्तु व्यक्तयः पूर्णतःअन्तर्मुखाः अथवा बर्हिर्मुखाश्च न भवन्ति। सामान्यतः अधिकव्यक्तिषु एतल्लक्षणद्वयमपि संगच्छते । केषुचित् सन्दर्भेषु अन्तर्मुख इव व्यवहरति । केषुचित् बहिर्मुख इव व्यवहरति।

## व्यक्तित्वस्य लक्षणसिद्धान्ताः

व्यक्तेःविविधलक्षणान्याश्रित्य व्यक्तित्वविषये व्याख्यानं कुर्मः । सामान्यजीवने अस्मन्मित्रेभ्यः कानिचन विशेषणानि योजयाम:। यथा– अयम् अलसः, उत्साही, निष्कपटः, लज्जावान्, क्रोधस्वभावी, पराश्रितः इत्यादयः । विविधसन्दर्भेषु व्यक्तेः व्यवहारस्य निरीक्षणं कृत्वा सामान्यीकरणं कुर्मः । सामान्यीकृतलक्षणमेतत् तां व्यक्तिम् अन्येभः पृथक्करोति। इथं लक्षणसिद्धान्ते व्यक्तेः लक्षणान्याश्रित्य तासां विभागः अथवा व्यवहारवर्णनं क्रियते। लक्षणसिद्धान्तेषु अल्पोर्ट- केटिलमहोदयोः सिद्धान्तौ प्रसिद्धौ स्तः। तयोः विषये जानीमः।

### अल्पोर्टमहोदयस्य व्यक्तित्वसिद्धान्तः -

गोर्डान् अल्पोर्ट (Gorden W.Allport) महोदयः लक्षणसिद्धान्त प्रवर्तकेषु प्रथमः वर्तते। सः मनुष्यस्य विभिन्नगुणानां लक्षणानाम् आधारेण व्यक्तित्वस्य व्याख्यानमकरोत्। तस्य मते व्यक्तित्वलक्षणं व्यक्तित्वसंऱचनाया मौलिकांशाः वर्तन्ते। अल्पोर्टमहोदय: मानवव्यक्तित्वस्य मौलिकांशानाम् अन्वेषणम् अकरोत् । सः स्वानुचराणां साहार्येन विविधपदकोषेषु मानवव्यक्तित्व ध्योतकानि 17.953 पदानि अभिज्ञातवान्। एतेषां पदानां विश्लेषणं कृतसमानार्थकपदानि अनुचितपदानि च तिरस्कृत्य अन्ततः 4.541 पदानां वर्गीकरणमकरोत्।

### मुख्यलक्षणानि -

एतानि व्यक्तित्वस्य प्रबल लक्षणानि भवन्ति। प्रत्येकं व्यक्तौ एतानि एकम् अथवा द्वे भवतः। परन्त्वेते संपूर्णव्यक्तित्वं प्रभावयन्ति । यथा – हास्यप्रियता,क्रोधता,इत्यादयः । सर्वव्यक्तिषु मुख्यलक्षणानाम्

उपस्थितिः अनिवार्या नास्ति । यस्य व्यक्तित्वे मुख्यलक्षणान्येतानि भवन्ति । सः एतैरेव लक्षणै: लोके बहुचर्चितः भवति। सर्वासु परिस्थितिषु मुख्यलक्षणानि अन्यान्यतिशय्य प्रकटितानि भवन्ति।

**गौणलक्षणानि-**

एतानि लक्षणानि प्रत्येकं मनुष्ये गौणरूपेण तिष्ठन्ति। एतान्नि कस्यचित् व्यक्तित्वस्य निर्णये अभिज्ञाने च प्रधानानि न भवन्ति । अर्थात् व्यक्तित्ववर्णनदृष्ट्या एतानि गौणानि भवन्ति । यथा स्वार्थः,कृपणः,इत्यादीनि लक्षणानि परोपकारसमये अथवा दानादिकार्येषु प्रस्फुटानि भवन्ति।

**केन्द्रीयलक्षणानि** –

एतानि मनुष्यस्य तादृशगुणा: सन्ति ये तत्तन्मनुष्यस्य व्यक्तित्ववर्णने,अभिज्ञाने च अत्यन्तमुपकुर्वन्ति । निष्कापट्यम्,दया,भीरूः,लज्जा,कठोरता,क्रूरत्वम्,परोपकारः,कामुकता,चाटुकारिता इत्यादय प्रायः प्रत्येकं मनुष्यस्य व्यक्तित्वे एतादृशाः 8 तः 10 गुणाः भवन्ति । अतः मनुष्याणाम् अभिज्ञानम् एतैरेव पदैः जनाः कुर्वन्ति।

अल्पोर्टमहोदयस्य मते कस्यचिन्मनुष्यस्य व्यक्तित्वावबोधने,व्याख्याने,अभिज्ञाने च मुख्यलक्षणानि (cardinal traits) केन्दीयलक्षणानि(central traits) च प्रधानभूमिकां वहन्ति । अतः मुख्यलक्षणानि व्यक्तित्वस्य निर्णयकाः इत्युच्यन्ते । शेषकेन्द्रीय लक्षणानि गौणलक्षणैः सह संयुज्य केषाञ्चन सामान्यव्यक्तित्वगुणानां निर्माणं भवति ये गुणाः जनेषु सामान्यतः भवन्ति । तादृशलक्षणानां सः सामान्यलक्षणानि इति नामकरणम् अकरोत्। अतः कस्यचिन्मनुष्यस्य व्यक्तित्वावबोधनाय व्याख्यानाय च मुख्य केन्द्रीयलक्षणेषु अवधानं दातव्यम्। एतैरेव व्यक्तित्वस्य अभिज्ञानं सम्भवति। लक्षणान्येतानि व्यक्तेः व्यवहारे स्थिरत्वमानयन्ति। परन्तु सर्वासु परिस्थितिषु व्यक्तित्वलक्षणानि निश्चितानि,स्थिराणि न भवन्ति। सन्दर्भमाश्रित्य लक्षणान्येतानि व्यक्तिं प्रवर्तयन्ति। अर्थात् कदाचित् परिवेषः मनुष्यस्य व्यवहारं प्रभावयन्ति।

**कार्यात्मकस्वातन्त्र्यम् (functional autonomy)**

अल्पोर्ट महोदयः व्यक्तित्वविकासे कार्यात्मकस्वातन्त्र्यम् इति नूतनभावनां प्रत्यपादयत्। अर्थात् परिपक्ववयस्काः(matured adults) पूर्वानुभवैः अप्रभाविताः सन्तः स्वतन्त्रतया कार्यं कुर्वन्ति। यद्यपि मानवाः लक्ष्यप्राप्तये कार्यं कुर्वन्ति ,लक्ष्यप्राप्तेः अनन्तरं स्वतन्त्रतां प्राप्नुवन्ति । येन व्यवहारेण विशिष्टावश्यकताया: पूर्तिः जायते।

कालान्तरे व्यवहारः आत्मनं तोषयति । यथा कश्चन मनुष्यः बुभुक्षां निवारयितुं किञ्चित् कार्यं करोति। ततः परं आत्मसंतृप्तये कार्यरतः भवति। व्याकुलता – तन्यतादिभिः विमुक्तये आरब्धं मद्यपानं ततः परमपि अनुवर्तते।

**वैयक्तिकोपागमः—**

मनुष्याणां व्यक्तित्वस्य अध्यापनाय सः वैयक्तिकोपागमम् आश्रयत् । बृहत्समूहानां निरीक्षणं कृत्वा व्यवहारस्य सामान्यसिद्धान्तानाम् अभिज्ञाने तस्य रुचिर्नास्ति । अर्थात् व्यक्तित्वस्याध्ययने सः सर्वेक्षणपद्धतिः(Survey method) विधिः इत्यादि सामूहिकोपायान् तिरस्करोति। परन्तु भावचित्रोपागमेन

प्रत्येकं व्यक्तेः व्यवहारस्य अध्ययनं करोति । प्रत्येकं मनुष्यस्य व्यक्तित्वलक्षणानि व्यक्तित्वव्यापारः च भिन्नाः भवन्ति ।

**व्यक्तित्वविकासस्य अवस्थाः—**

अल्पोर्टमहोदयः व्यक्तित्वविकासस्य तिस्रः अवस्थाः प्रत्यपादयत् । ताः बाल्यावस्था,कौमारावस्था,प्रौढावस्था च बाल्यावस्थातः प्रौढावस्थापर्यन्तं व्यक्तित्वविकासः निरन्तरं न भवति । बाल्यकौमारप्रौढावस्थासु व्यक्तेः मूल्यानि आवश्यकताः अभिरुचयः इत्यादयः समानाः न सन्ति । परन्तु वर्तमाने जीवने व्यक्तेः पुनःस्मरणं विधाय व्यवहारपरिवर्तने गतानुभवान् प्रकटयति ।

इत्थम्अल्पोर्टमहोदयः व्यक्तित्वस्य व्याख्यानमकरोत् ।

**अल्पोर्टकेटिलव्यक्तित्वसिद्धान्तस्य शिक्षाक्षेत्रे अनुप्रयोगः -----**

1.अध्यापकः छात्रेषु योग्याभीरुचीनाम्, अभिवृत्तीनां च निर्माणं कुर्यात् ।

2.समानलक्षणानां विकासः- छात्रेषु सहयोगः इत्यादि समानलक्षणानां विकासः करणीयः।

3.वैयक्तिकविभेदानां पूर्त्तिः। छात्राणां वैयक्तिकविभेदानां पूर्तये छात्रकेन्द्रित-क्रियाकेन्द्रित-अभिप्रेरणात्मक-शिक्षापद्धतीनां चयनं कर्तव्यम्।

4.पाठ्यक्रमः छात्रकेन्द्रितः जीवनकेन्द्रितः समुदाय-केन्द्रितश्च भवेत्।

5.सामर्थ्यानां गतिशीललक्षणानाञ्च विकासः। शिक्षिकाः विद्यालयसम्बन्धकार्यक्रमैः विविधसामर्थ्यानां गतिशीललक्षणानाञ्च विकासाय प्रयत्नं कुर्युः।

6.बाह्यलक्षणानां विकासः – बालचरसंघः शैक्षिकयात्राः, सामुदायिकचर्चा इत्यादिभिः छात्रेषु सत्यनिष्ठा, उत्साहः, कार्यकुशलता , सावधानता इत्यादि गुणानां विकासः कर्त्तुं शक्यते।

**सिग्मन् फ्रयडमहोदयस्य मनोविश्लेषणसिद्धान्तः .-------**

वियेनादेशीयः सिग्मन् फ्रयडमहोदयः वृत्तिरीत्या वैद्यः आसीत्। सः मानसिकरोगाणां चिकित्सां कुर्वन् रोगाणां कारणान्यन्विष्टवान्। सः हिस्टोरिया इति पद्धत्या चिकित्सां करोति स्म। सः मानसिकरुग्णानां विषये अनुसन्धानं कुर्वन् मनोविश्लेषणसिद्धान्तॉन् प्रत्यपादयत्। सिद्धान्ते अस्मिन् मनसः अचैतन्यावस्थायां विद्यमानभावाः अभिरुचयश्च व्यक्तित्वं प्रभावयन्तीति न्यरूपयत्। तस्य सिद्धान्तः विश्वप्रसिद्धिमाप्नोत्। तस्य शिष्याः प्रशिष्याश्च अस्यां दिशि अनुसन्धानान्यकुर्वन्। फलतः मनोविज्ञाने मनोविश्लेषणम् इति नूतनसंप्रदायः आविर्भूतः।

**1.व्यक्तित्वसंरचना --**

मानवमनसः संरचना स्पष्टीकर्तुं एवं कार्यप्रणालीञ्च वर्णयितुं इद्मतिः अहंमतिः अध्यहंमतिः इति भागत्रयमकरोत्।

इद्मतिः –एषा मतिः मानवव्यक्तित्वव्यवहारस्य पाशविकप्रवृत्तीनाम् भवति। विशेषतः इद्मतिः जन्तुवाञ्छा

निलयः भवति। मनुष्यः इन्द्रियस्य सुखं प्राप्तुं निरन्तरं चेष्टते। तदर्थं सः सामाजिक—सांस्कृतिकनियमान् नैतिकमूल्यानि च अविगणय्य प्रयत्नरतः भवति।

अ—अहंमतिः –इद् मतौ जायमानानाम् असामाजिकानैतिकेच्छानां नियन्त्रणम् अहंमति करोति। एतत् यथार्थम् अनुसृत्य कार्यं करोति। मनुष्यः विविधपरिवेशेषु किं कर्तव्यं किं न कर्तव्यं इत्यनेन निर्धारयति।

इ- अध्यहंमतिः - इयं व्यक्तित्वाय नैतिकस्वरूपं प्रयच्छति। इयम् आदर्शसिद्धान्तान् आश्रित्य प्रवर्तते।

सुखप्राप्तेः आनन्दप्राप्तेः अपेक्षया नैतिकमूल्यानाम् आदर्शानाञ्च प्राप्तिः अस्याः मुख्योद्देश्यं भवति।

धर्माधर्मयोः पापपुण्ययोः निश्चयः अनयैव क्रियते।

**2.मूर्तिमत्वगतिशीलता ----**

मानवव्यवहारे मनसः प्रधानभूमिका वर्तते। **फ्रयडमहोदयस्य मते मनसः** तिस्रः अवस्था सन्ति। ते **यथा** – **अ. चेतनमनः इ. अवचेतनमनः उ. अचेतनमनः**

**अ.--- चेतनमनः** --- दैनन्दिनजीवने प्राप्ताः अनुभवाः, भावाः, विचाराः, शब्दं च चेतनमनसि तिष्ठति यान् मनुष्यः झटिति स्मर्तुं शक्नोति। स्मृतौ विद्यमाना अनुभवाः भावाः पूर्वज्ञानस्य मनुष्यस्य व्यवहारं प्रभावयन्ति।

**इ.---- अवचेतनमनः** --- एतत् किञ्चित् गम्भीरं वर्तते, मनुष्येण विस्मृताः भावाः, अनुभावाः,

विचाराश्च उपचेतनमनसि भवन्ति। परन्तु मनुष्यः स्वप्रयत्नेन चेतनावस्थायाम् आनेतुं शक्नोति। अतः एतदपि मनुष्यस्य व्यवहारं प्रभावयन्ति।

**उ.— अचेतनमनः** ----- बालस्य अभिलाषा, इच्छाः, अभिरुच्यादयः अचेतनमनसि तिष्ठन्ति। वस्तुतः अचेतनमनसः प्रभावः व्यक्तित्वे अत्यधिकं भवतीति सिग्मन् फ्रयडमहोदयेन न्यरूपयत्।

अन्ततः मानवस्य संपूर्णव्यवहारे चेतनमनः केवलं 10% व्यवहारं प्रभावयति। मानवस्य 90% व्यवहारः उपचेतन-अचेतनमनोभ्यां प्रभावित: भवति। तत्रापि उपचेतनमनस: अपेक्षया अचेतनमनसः प्रभावः अत्यधिकम् इति फ्रायडवर्यः अभिप्रैति।

**मनोविश्लेषणसिद्धान्तस्य शिक्षाक्षेत्रे अनुप्रयोगः**

सिग्मन् फ्रायडवर्यः मनोविज्ञाने मनोविश्लेषणसम्प्रदायस्य प्रवर्तकः वर्तते । सः व्यवहाराध्ययने अचेतनमनसः प्रधानभूमिकाम् अकल्पयत् । अतः ‘ **चैतनस्य विज्ञानं मनोविज्ञानम्** ’ इति भावना तिरस्कृता । पुनः व्यवहारविश्लेषणे इदमतिः, अहमतिः,अध्यहंमतिश्च अत्यन्तम् उपकुर्वन्ति । ततः परं फ्रायडमहोदयेन प्रतिपादितः मनोलैङ्गिकविकासः मानसिकरोगाणां कारणान्वेषणे चिकित्सायाञ्च अत्यन्तम् उपकरोति । एतेन मनोविज्ञानक्षेत्रे महत्परिवर्तनानि अभूवन् ।

फ्रायडमहोदयेन प्रतिपादितः मनोविश्लेषणसिद्धान्तः मानवव्यवहाराध्ययने अत्यन्तमुपकरोति ।

सः सांवेगिकव्यवहाराध्ययने सहजातानाम् आवश्यकतानाम् इच्छानाञ्च भूमिकां प्रत्यपादयत् । फलतः शिक्षाक्षेत्रे बालकेन्द्रितशिक्षायाः आविष्कारः अभवत् ।

फ्रायडमहोदयेन प्रतिपादितम् अचेतनमनः व्यवहारविकृतीनामवबोधनाय कारणान्वेषणाय च उपयोगी आसीत् ।अतः शिक्षाक्षेत्रे असाधारणबालानां स्वभावाध्ययने सिद्धान्तोऽयं शिक्षकेभ्यः अत्यन्तमुपकरोति ।

सिद्धान्तोऽयं मानसिकस्वास्थ्यस्य संरक्षणाय उपायान् विशदीकरोति । तत्र शिक्षकाणां, पित्रोः,अभिभावकानाञ्च दायित्वं भूरि वर्तते ।

मनोविश्लेषणसिद्धान्तः अप्रकटितमनोभावानां दमितेच्छानां विमोचनाय catharsis इति नूतनप्रक्रियाम् अपि च , शिक्षाक्षेत्रे प्रशिक्षणे च विविधपाठ्यसहगामिकार्याणां, भावप्रकाशनस्वातन्त्र्यस्य च अत्यावश्यकतां प्रत्यपादयत् ।

**उपसंहारः–**

इत्थं मनोविज्ञाने नैके मनोविज्ञानिन: भृशं प्रयत्नं विधाय व्यक्तित्त्वं स्पष्टीकर्तुं व्यक्तित्त्वसिद्धान्तान् प्रतिपादितवन्त: तेषु हिप्पोक्रेटसमहोदयः शरीराकृतिम् आश्रित्य मनुष्याणां व्यक्तित्वविषये व्याख्यानमकरोत्। अल्पोर्टमहोदयः मनुष्यस्य विभिन्नागुणानां लक्षणानाम् आधारेण व्यक्तितत्वस्य व्याख्यानमकरोत् । सिग्मन्फ्रायड महोदयः मनसः अचैतन्यावस्थायां विद्यमाना भावाः अभिरुच्यश्च व्यक्तित्वं प्रभावयन्तीति न्यरुपयत् । एते सिद्धान्ताः व्यक्तित्वनिरुपणे बहु सहाय्यं कुर्वन्ति ।

**********

**सन्दर्भग्रन्थाः -**


1. उच्चतर शिक्षा मनोविज्ञान, एस-पी- गुप्ता, शारदापुस्तकभवनम्, इलाहाबाद, 2004 ।
2. शिक्षायाः मनोवैज्ञानिकाधाराः, डा- बी- पद्ममित्रश्रीनिवासः, जगदीशसंस्कृतपुस्तकालय,जयपुर ,2012 ।
3. अर्वाचीनं मनोविज्ञानम्, ले मामराजदत्तकपिला, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी,2002 ।
4. शिक्षामनोविज्ञानम्, पि. नागमुनिरेड्डी, राष्ट्रियसंस्कृतविद्यापीठ, तिरुपति, 2008 ।
5. मनोविज्ञानमीमांसा, आचार्य विश्वेश्वर, आत्माराम अण्ड सन्स, दिल्ली,1959 ।
6. प्राचीनभारतीयमनोविज्ञानम्, दिनेशचन्द्र भट्टाचार्यः, कलकत्ता, 1972 ।

# भारतीयपाश्चात्यदर्शनयोः संवर्णितानां शैक्षिकतत्त्वानां समालोचनम्

दण्डिवर्गः

परियोजनाकार्यस्य मार्गदर्शकः

डॉ. सचिनकुमारः

परियोजनाकार्यस्य सदस्याः

1. रोजालिन् साहू 2. जगन्नाथनायकः
3. सुमन्त बैगा 4. टिकेश्वर मेहेर
5. श्वेतालिना प्रधान 6. सुनील गडतिआ

## शिक्षाया अर्थः

संस्कृतभाषायां "शिक्षा" इति पदस्य व्युत्पत्तिः 'शिक्ष् विद्योपादाने' इति धातोः "गुरोश्च हलः" इति पाणिनीयसूत्रेण 'अ ' प्रत्यये कृते सति निष्पन्ना भवति। अस्य अर्थः भवति 'विद्याग्रहणम् ' इति। "शिक्षयति या सा शिक्षा" "शक्तुं शक्तो भवितुमिच्छा शिक्षा" चेति व्युत्पत्तिद्वयं शिक्षाशब्दस्य वर्तते। साम्प्रतिकयुगे शिक्षायाः यत् पदं प्रचलितं वर्तते, तत् तु आङ्ग्लभाषायाः 'एज्यूकेशन्' (Education) इति पदस्य पर्यायपदमस्ति। एज्यूकेशन्' पदं लैटिनभाषाया E तथा Duco पदयोः निष्पन्नः। ययोः अर्थः क्रमशः "अन्तः" (Internal) "बहिरानयनम्" (Out of) च वर्तते। एवं प्रकारेण एज्युकेशन इति पदस्यार्थो भवति- "आभ्यन्तराद् बहिरानयनमिति'' (Education to lead forth) । एज्यूकेशन्' पदस्य लैटिनभाषायां व्युत्पत्तित्रयं प्रचलितम्। यथा -

- एजुकेटम् (Educatum) एतस्यार्थः भवति शिक्षणस्य प्रशिक्षणस्य वा कला `To teach act of teaching or training.'
- एजुकेयर (Educare) इत्यस्यार्थः भवति अग्रेसरणं, बहिरानयनं विकासीकरणं वेति `To Educate, To bring up To raise",
- एजुसियर (Educere) एतस्यार्थः भवति To bring gorth , To head forth , to lead out विकासोत्पादनम् इति।

## प्राचीनकाले शिक्षायाः अर्थः

प्राचीनकाले विविधराष्ट्रेषु विविधसमाजानुगतम् आदर्शम् उद्देश्यञ्च अनुसृत्य शिक्षायाः विविधा अर्थाः आसन्। प्राक्तनभारते शिक्षा आत्मज्ञानस्य साधनम् आसीत्। शिक्षा मानवजीवनस्य विभिन्नकार्यसम्पादनाय महत्वपूर्णा आसीत्। इत्थं शिक्षाया विभिन्ना अर्थाः प्राचीनकाले आसन्। उपनिषदनुसारं "शिक्षा नाम तत्साधनम्, यस्य मुख्यं साध्यं मुक्तिः वर्तते (Education is that whose end produce is salvation). इशोपनिषदि "विद्ययाऽमृतमश्नुते" इत्युक्तम् अस्ति। जगद्गुरुशंकराचार्यस्य मते "आत्मानुभूतिरेव शिक्षा" अर्थात् शिक्षया एव आत्मनः साक्षात्कारः भवति।

शिक्षया जन्मजातशक्तीनां विकासः भवति, अर्थात् व्यक्तित्वस्य विकासो जायते।

## शिक्षा दर्शनस्य स्वरुपम्

साम्प्रतिकयुगे दर्शनस्यार्थः व्यापको जातः । अस्य क्षेत्रं अतीवविस्तृतमस्ति । दर्शनमद्य अस्माकं समक्षे आध्यात्मिक- दर्शनम् (Metaphysics), नैतिकदर्शनम् (Moral philosophy), राजनैतिकदर्शनम् (Political Philosophy), शिक्षादर्शनम् (Educational philosophy) इत्यादिषु विभागेषु विभक्तमस्ति। दर्शनशास्त्रं केवलं तेषामेव तथ्यानामन्वेषणं करोति, येषां पुनर्स्थापनं भवितुम् अर्हति । प्रत्येकं जीवनदर्शनम् एकस्य विश्वासस्योपरि आधारितं भवति । विश्वासोऽयं जीवनाय उपयोगी भवति, अत एवास्य शैक्षिकमहत्त्वमपि विद्यते । शिक्षायां दर्शनस्य महान् उपयोगः भवति । दर्शनेनैव शिक्षायाः उद्देश्य-विधि-सामग्र्यादीनां तत्वानां निर्धारणं क्रियते । अथात्र भारतीयपाश्चात्यदर्शनयोः अनुसारं एतेषां तत्त्वानां विमर्शः प्रस्तूयते।

## भारतीयदर्शनानुसारं शैक्षिकतत्वनि

भारतीयदर्शनपरम्परा आस्तिक-नास्तिकदर्शनेषु द्विधा विभज्यते । विद्वद्भिः आस्तिकदर्शनेषु षड् दर्शनानि नास्तिकेषु च त्रीणि दर्शनानि वर्गीक्रियन्ते । भारतीयदर्शनेषु ज्ञानविषयकचर्चा सविस्तरेण उपलभ्यते। अनेन सहैव व्यावहारिकजीवनस्य सिद्धान्ताः अपि दार्शनिकैः निगदिताः सन्ति । मानवस्य व्यावहारिकजीवनस्य उन्नयनाय शिक्षायाः अतीवमहत्त्वपूर्णा भूमिका भवति । शिक्षा ह्येका विशिष्टप्रक्रिया नाम । यत्र बहुविधतत्त्वानि विद्यन्ते, तद्यथा – शिक्षा, शिक्षकः, छात्रः, पाठ्यक्रमः, शिक्षणविधयश्चेत्यादीनि। शिक्षायाः प्रक्रियायामेतेषां समेषामपि तत्त्वानां स्वीय-वैशिष्ट्यं भवत्येव । भारतीयदर्शनेषु बहूत्र शिक्षासम्बन्धितान्येतानि तत्त्वानि यत्र तत्र विवेचितानि सन्ति । शोधप्रायोजनायामस्यां भारतीय-पाश्चात्यदर्शनयोः संवर्णितानां शैक्षिकतत्त्वानां समालोचनात्मकम् अध्ययनं विधीयते । अतः समालोचनक्रमेऽस्मिन् आदौ तावत् भारतीयदार्शनिकपरम्परायां निगदितानि एतानि शैक्षिकतत्त्वानि विमृश्यन्ते।

## I. शिक्षा

आस्तिकदर्शनेषु सर्वप्राचीनं सांख्यदर्शनं मन्यते । अस्य दर्शनस्य प्रणेता महर्षिकपिलः आसीत् । सांख्यदर्शने शिक्षायाः विषये स्वतन्त्ररूपेण विचारः नास्ति, किन्तु तस्य तत्वमीमांसायां शिक्षायाः अन्तिमोपदेशस्य ज्ञानमीमांसा, पाठ्यचर्या, अनुशासनम्, गुरुशिष्यसम्बन्धश्चेत्यादिविषयेषु ज्ञानप्राप्तिः भवति। सांख्यदर्शनानुसारम् वास्तविकशिक्षा मनुष्येभ्यः प्रकृतिपुरुषयोः भेदज्ञानेन भवति । आस्तिकदर्शनेषु वेदान्तदर्शनम् अन्यतमम् । जगद्गुरुशङ्कराचार्यः अस्य दर्शनस्य प्रवर्तकः । एतत् शास्त्रं सर्वेषां शास्त्राणां शिरोमणि इति कथ्यते । अत्र “ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः” इति विचारः मुख्यः भवति । वेदान्तदर्शनानुसारं अज्ञानं निवार्य बालकाय सत्यज्ञानस्य प्रतीतिरेव शिक्षा । ईशावास्योपनिषदि

`विद्ययामृतमश्नुते' इति वाक्ये विद्याशब्देन परब्रह्मविद्या विवक्षिता । उपनिषदनुसारं परब्रह्मविद्यया परमपुरुषार्थस्य मोक्षस्य च प्राप्तिः भवति । अतः विद्या अथवा शिक्षा नाम मोक्षप्राप्त्याथर्मम् किञ्चिद् साधनं उपकरणं वा इत्युच्यते । एतस्याः शिक्षायाः अन्तिमम् उद्देश्यं `ब्रह्मप्राप्तिः' भवति । सर्वेषां दर्शनानां प्रवृत्तिः दुःखस्यात्यान्तिकनिवृत्तये भवति । न्यायदर्शनानुसारं दुःखस्यात्यान्तिकनिवृत्तिः मोक्षावस्थायामेव सम्भवति । मोक्षप्राप्तये सर्वेषां दर्शनानां दृष्टिः सिद्धान्तश्च भिन्नः भिन्नः वर्तते । न्यायदर्शनानुसारं मोक्षः षोडशपदार्थानां तत्वज्ञानेन भवति, तद्यथा–"प्रमाण-प्रमेय-संशय-प्रयोजन-दृष्टान्त-सिद्धान्त-अवयव-वितर्क-तर्क-विर्णय-वाह-जल्प-वितङ्ग-हेत्वाभाषच्छल-जाति-निग्रहस्थानानां तत्व-ज्ञानानिःश्रेयसाधिगमः इति । गौतममते "षोडशपदार्थविषयकज्ञानमेव शिक्षा" । ज्ञानमेतद्धि द्विविधं भवति । अथार्था-यथार्थभेदेन यथार्थज्ञानमेव प्रमा इत्युच्यते । सा च प्रमा चतुर्धा विभज्यते- प्रत्यक्षप्रमा, अनुमितिप्रमा, उपमितिप्रमा, शाब्दप्रमा इति । प्रत्यक्षप्रमात्मकज्ञानस्य श्रोतांसि षडिन्द्रियाणि, अनुमितिप्रमात्मकज्ञानस्य मुख्यश्रोतं व्याप्तिज्ञानम् । उपमितिप्रमायाः मुख्यश्रोतं सादृश्यज्ञानं तथा शाब्दप्रमायाः मुख्ये श्रोतं भवति पदज्ञानमिति ।

बौद्धानां दर्शनिकविचाराणाम् अनुसारं शिक्षा प्रदीयते । बौद्धधर्मस्य प्रभावेन समाजे शिक्षाक्षेत्रे च क्रांतिकारिपरिवर्तनानि जातानि । चतुर्णां वर्णानां महिलानाञ्च कृते शिक्षाया अधिकार आगतः । शिक्षायाः सन्दर्भे समाजे कीदृशोऽपि भेदभावः नैव पर्यपाल्यत । बौद्धकालीनशिक्षायां वर्ण-लिङ्गयोराधारेण भेदभावः न दृश्यते । बौद्धानां काले शिक्षायै संस्कारद्वयं विधीयते स्म । एकं प्राथमिकशिक्षायां "पब्बजासंस्कारः" अपरञ्च उच्चशिक्षायां "उपसम्पदासंस्कारः" । नास्तिकभारतीयदर्शनेषु जैनदर्शनं महत्त्वपूर्णमस्ति । दर्शनमिदं शिक्षायाः अन्तिमोद्देश्यं `कैवल्यप्राप्तिः' मनुते । कैवल्यमिदं व्यक्तित्वस्य चरमविकासस्य स्थितिः भवति । जैनदर्शनानुसारं शिक्षायाः वैशिष्ट्येषु मोक्षप्राप्तिः, गाम्भीर्यगुणसम्पादनं सयंमशक्तेश्च विकासः, आचारदर्शनस्यावगमनम्, विज्ञानत्रिकोणस्य च उपलब्धिः, कलात्मकजीवनयापनाय योग्यतायाः उपलब्धि, शारीरिक–मानसिक–आध्यात्मिकशक्तीनां पूर्णतयोन्नयनम् इत्यादयः।

## II. शिक्षाया उद्देश्यम्

सांख्यदर्शनस्य शिक्षायाः मुख्यम् उद्देश्यम् भवति त्रिविधदुःखानाम् आत्यन्तिकनिवृत्तिः इति । न्यायदर्शने सूत्रकारेण मोक्षस्य हेतवे षोडशपदार्थानि विवेचितानि, एतेषां षोडशपदार्थानां वास्तविकं ज्ञानमेव न्यायदर्शनरीत्या शिक्षायाः उद्देश्यम् । शिक्षायाः मुख्योदेश्यं निश्रेयसाधिगम: (मोक्ष:) भवति । गौणोद्देश्यानां विषये उक्तं यत् –

**मोहं रूणद्धि विमलीकुरुते च बुद्धिं सूते च संस्कृतपदव्यवहार शक्तिम् ।**
**शास्त्रन्तराभ्यसमयोग्यतया युनक्ति तर्कश्रमोन कुरुते कामिहोपकारम् ।।**

बौद्धदर्शनानुसारं शिक्षायाः उद्देश्यानि - निर्वाणप्राप्तिः, जीवनाय संसिद्धतासंपादनम्, चरित्रणिर्माणम्, उत्तमनागरिकाणां निर्माणम्, स्वस्थशारीरिकविकाससम्पादनम्, व्यक्तित्वविकाससम्पादनं

सत्त्वस्य प्राप्तिश्च इत्यादीनि भवन्ति । जैनदर्शनानुसारं शिक्षायाः उदेश्यं मानवव्यक्तित्वस्य समग्रविकासः मन्यते।

## III. पाठ्यचर्या

अद्वैतवेदान्ते "ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः" इति परमसिद्धान्ते स्वीकृते सति 'जन्माद्यस्य यतः' इति सूत्रेण 'यतो वा इमानि भूतानि जायन्ते' इति श्रुतिवाक्ये किञ्चित् शिक्षणीयम् अस्ति। सच्चिदानन्दस्वरूपब्रह्मणः अधिगमः छात्रस्य भवतु इति शिक्षकेन काम्यते । सांख्यदर्शने पाठ्यचर्यायां पदार्थस्य आत्मनश्च इत्युभयोरपि सम्बन्धितस्य ज्ञानस्य क्रियाणां च स्थानं स्यात् । अत्र मानवस्य विकासक्रमः सुचिन्तित अस्ति । अत्र ज्ञानं वस्तुविशेषस्य गुणानां माध्यमेन भवति । "ऋते ज्ञानान्नमुक्ति " इति श्रुतिम् आधारिकृत्य प्रवर्तते न्यायशास्त्रं तत्र ज्ञानपदस्य तात्पर्यं पदार्थस्य यथार्थज्ञानमिति वर्तते । अतः षोडशपदार्थाः सम्यक्तया ज्ञातव्याः शिक्षणीयाश्च इति । बौद्धदर्शनस्य पाठ्यक्रमे लौकिक-अलौकिकविषयाः भवन्ति । लौकिकविषयेषु लौकिकपाठ्यक्रमः अलौकिकेषु च धार्मिकपाठ्यक्रमः भवति। लौकिकपाठ्यक्रमे लेखनम्, गणना, कृषिः, पशुपालनम्, चिकित्सा, धनुर्विद्या, मल्लविद्या, शिल्पविद्या, शारीरिकव्यायामश्चेत्यादयः विषयाः अन्तर्भवन्ति । अलौकिकपाठ्यक्रमे भौतिकजगत्, विश्वव्यवस्था, जगतः कार्यव्यापारः, जगति मानवस्य स्थानम्, कार्यकारणसम्बन्धः दुःखस्य कारणं निवारणञ्चेत्यादयाः विषयाः समाविशन्ति।

## IV. शिक्षणविधिः

शिक्षणप्रक्रियायां शिक्षणविधीनाम् अतीवमहत्त्वं भवति । शिक्षणविधभिरेव पाठ्यवस्तुनः समुचिताधिगमः सम्भवति । दर्शनशास्त्रेषु बहुविधप्राचीनभारतीयपारम्परिकविधयः विवेचिताः सन्ति । वेदान्तदर्शने उपनिषत्सु व्याख्यान-प्रश्नोत्तर-तर्कादिरीत्या ज्ञानस्य विनिमयः क्रियते । प्रश्नविधेः माहात्म्यं स्वतन्त्रस्य प्रश्नोपनिषदः अस्तित्वेन सिद्ध्यत एव। सांख्यदर्शनानुसारं ज्ञानं वस्तुविशेषस्य गुणानां माध्यमेन भवति। ज्ञानप्राप्तये उद्दीपन-अनुक्रिया ज्ञानप्राप्तेः उपकरणत्वेन कार्यं करोति। तत्र कर्मेन्दियाणि ज्ञानेन्द्रियाणि च बाह्योपकरणत्वेन साहाय्यं प्रयच्छन्ति । न्यायदर्शनानुसारं सर्वेषां पदार्थानां प्रमात्मकाधिगमम् अन्तेवासिनः कुर्युः एतदर्थम् आचार्यः शिक्षणविधिम् अनुसरति। तदर्थं बहवः विधयः अनुस्रियन्ते स्म। विधीनां प्रसङ्गे प्रमाणानां महत्त्वम् आसीत् । तत्रापि अनुमानस्य प्राधान्यम् आसीत् । यतो हि प्रत्यक्षपरिकालितमप्यर्थम् अनुमानेन बुभूत्सन्ते तर्कसिका इति उदयनाचार्यस्य वचनप्रमाणम्। बौद्धकाले लेखनकार्यं प्रचलितम् आसीत् । अतः शिक्षणाधिगमप्रक्रियायां लेखनविधेः समावेशः अभवत् । तत्कालिकशिक्षायाः भाषामाध्यमः पाली आसीत्। अधिगमसम्पादनाय विभिन्नविधयः प्रयुज्यन्ते स्म, तद्यथा – मौखिकविधिः, प्रत्यक्षविधिः, व्याख्यानविधिः, प्रश्नोत्तरविधिः, संगोष्ठीविधिश्च इत्यादयः । जैनदर्शनस्य परम्परायां तीर्थङ्कराणामुपदेशस्य भाषाप्राकृतम् आसीत्। तत्कालिकसमाजे प्राकृतभाषा जनसामान्यस्य भाषा आसीत् । शिक्षणस्य प्रक्रियायामपि प्राकृतभाषायाः प्रयोगः आसीत् ।

## V.गुरुशिष्यसम्बन्धः

वेदान्तदर्शने आचार्यस्य स्थानं महत्वपूर्णं वर्तते। आचार्य-शिष्ययोः पितापुत्रवत् सम्बन्धः आसीत्। वेदान्तदर्शनानुसारं शिक्षायां ज्ञानार्जने वा छात्रः शिष्यः वा केन्द्रीभूतः मन्यते। तत्र ज्ञानार्जनप्रक्रियायां छात्राणां वैयक्तिकविभिन्नतानां संघटनस्यावसरः भवति। छात्राणां जीवनं नैतिकम् अनुशासितञ्च कर्तुं विशेषबलं दीयते। वेदान्तदर्शनमिव न्यायदर्शनेऽपि शिष्याऽचार्ययोः सम्बन्धः पितापुत्रवत् भवति। अत्र गुरूः पथप्रदर्शकः छात्रश्च जिज्ञासुः भवति। न्यायदर्शनमते शिष्यसन्दर्भे ज्ञानस्य अधिकारिविषये तर्कसंग्रहकारेणोक्तं यत् "अधीतव्याकरणकाव्यकोशः अवधीत न्यायशास्त्रः बालः इति।" अत्र बालशब्दस्य ग्रहणधात्वपटुः पाल इति तात्पर्यम्। तादृशः बावाल एव छात्रः ज्ञानार्जनस्याधिकारी वेति भवितुमर्हतीति।

बौद्धदर्शने गुरोः सम्मानपूर्णं स्थानं वर्तते। सम्मानं हि उच्चकुले जन्ममात्रेणैव न भवति स्म, प्रत्युत उच्चकोटेः ज्ञानवशादेव गुरुः पूज्यते स्म। अध्यापकस्य स्तरानुगुणम् तस्य उपाधिस्तरः परिवर्तितः भवति, तद्धि उपाध्यायः आचार्यः महोपाध्यायः इत्यादिभिः वर्गीक्रियन्ते। बौद्धदर्शने गुरुशिष्यसम्बन्धः पवित्रः, स्नेहपूर्णः, समादृतः, पारस्परिकविश्वासभावादिभिः युक्तः आसीत्। शिष्यस्य कर्तव्येषु आचार्यसेवा, मठशुद्धिः, भिक्षाटनम्, गुर्वाज्ञापालनञ्चेत्यादिकार्याणि आसन्। शिष्यस्य शारीरिक-मानसिक-बौद्धिक-आध्यात्मिकादिगुणानां विकाससम्पादनं गुरोः दायित्वमासीत्। गुरुशिष्ययोः मध्ये पितापुत्रवत् सम्बन्धः विलसति स्म। जैनदर्शनपरम्परायां गुरु-शिष्ययोः सम्बन्धः अतीवमधुरः आसीत्। गुरुः स्वयमेव शिष्याणां कल्याणस्य यत्नं विदधाति। कदाचित् सः शिष्यान् प्रति कठोरदण्डस्य व्यवस्था अपि करोति स्म। शिष्यः आचार्यस्य आज्ञापालनं करोति, दण्डव्यवस्थां मौनरूपेण स्वीकरोति, भिक्षायां सुस्वादुभोजनं न प्राप्नोति, सूर्योदयात् प्राक् शास्त्राभ्यासः करोति, अल्पनिद्रा–अल्पभोजनञ्च ग्रहणं करोति स्म।

## पाश्चात्यदर्शनानुसारं शैक्षिकतत्वानि

पाश्चात्यदर्शनेषु आदर्शवादः, प्रकृतिवादः, प्रयोजनवादः, यथार्थवादः इत्यादीनां विवेचनं क्रियते। एतेषां वादानां समर्थकदार्शनिकैः शिक्षाशास्त्रविषये विशदं विवेचनं क्रियते। यत्र शैक्षिकतत्वानां पृथक् पृथक् वर्णनं शिक्षाशास्त्रिभिः कृतम्। अथात्र तेषां प्रमुखदर्शनानामनुसारं शैक्षिकतत्त्वविषयकं समालोचनं प्रस्तूयते।

## I. शिक्षा

पाश्चात्यदर्शनेषु आदर्शवादः प्राचीनतमं दर्शनं मन्यते। आदर्शवादः मनुष्यस्य आध्यात्मिकपक्षविषये बलं ददाति कारणमाध्यात्मिकमूल्यानि मानवस्य जीवनस्य च महत्वपूर्णानि तथ्यानि भवन्ति। आदर्शवादिनां विश्वासः यत् मनुष्यः स्वीयं सीमितमनः असीमितमनसा प्राप्नोति ते अङ्गीकुर्वन्ति यत् व्यक्तिः संसारश्च उभावपि बुद्धेः अभिव्यक्तिः इति। "Idealism is one from or other

permeates the whole of the history of philosophy ." इति `**एडम्स**'महोदयेन प्रतिपादितम् । आदर्शवादिनामनुसारं शिक्षा एका सामाजिकी आवश्यकता अस्ति । मनुष्यसमाजस्य एकं वस्तुनिष्ठं प्रक्षेपणं भवति, यच्च एकस्मिन् वैयक्तिकस्वरूपे प्रकटितं भवति, तथा च प्रक्षेपणं समाजे 'सद्' प्रतिबिम्बं करोति । तेन कारणेन समाजे विद्यालयः तथा शिक्षाया आवश्यकता भवति । प्रकृतिवाद: तत्वमीमांसाया: तादृशं रुपं भवति यत्र प्रकृतिरेव पूर्ववास्तविकता मन्यते । प्रकृतिवादे अलौकिकं पारलौकिकञ्च जगतः अस्तित्त्वं न मन्यते । " प्रकृतिवाद आदर्शवादस्य विरोधे प्रवर्तते । जडतत्वस्य अधीने मन: भवति । अन्तिमा वास्तविकता जडे निहिताऽस्ति, न तु आध्यात्मिके'' इति **थाँमस-लौंग**महोदयौ अवदताम् । शिक्षाया: प्रकृतिवादस्य आन्दोलनं **बेकन -कामेनियस**महोदयौ आरभताम् । प्रख्यातप्राकृतिकदार्शनिकस्य **रूसो**महोदयस्य प्रयत्नैः आन्दोलनमिदं पूर्णतामवाप्नोत् । वास्तविकरूपेण रूसोमहोदय एव प्रकृतिवादस्य शिक्षाशास्त्रे सम्यक् विनिवेशः अकरोत् । प्रकृतिवादस्य शिक्षायां मुख्यवैशिष्ट्येषु प्रकृतेः अनुसरणम्, बालकस्य केन्द्रीयावस्था, पुस्तकीयशिक्षायाः विरोधः, बालकस्य कृते स्वातन्त्र्यम् इत्यादीनि भवन्ति ।

आधुनिकशिक्षाव्यवस्थायां प्रयोजनवादस्य अतीवप्रभावो विद्यते । प्रयोजनवादः मस्तिष्कस्य स्वभावः तथा दृष्टिकोणं भवति । अयं सत्यमेव विचाराणां मूलसिद्धान्तः भवति । अयं वास्तविकतयाः सिद्धान्त अपि वर्तते । "प्रयोजनवादः अस्मभ्यम् अर्थसिद्धान्तम्, ज्ञानसिद्धान्तम् वास्तविकसिद्धान्तञ्च प्रददाति'' इति **प्रैटे**महोदयेन प्रतिपादितम् । प्रयोजनवाद आवश्यकरूपेण एकं मानवतावादीदर्शनं भवति, यः जानाति यत् मानवः स्वस्य क्रियां कुर्वन् स्वयं मूल्यनिर्णयं करोति । प्रयोजनवादस्य शिक्षायाः प्रमुखवैशिष्ट्यानि अधोलिखितानि भवन्ति –

- शिक्षा एका सामाजिककार्यम् (Education is social function )
- बालकस्य वास्तविकजीवनानुभवः (Childs real life enterience)
- बालकस्य महत्वम् (Important of child)
- शिक्षायाः लोकतान्त्रिकप्रक्रिया (Democratic process of education )

आदर्शवादस्य रूढीनां विरोधे यथार्थवादस्य प्रवर्तनम् अभवत् । यथार्थवादिभिः सत्यस्य विकासः मानवमस्तिष्के मन्यते । आधुनिकदर्शनस्य यथार्थवादस्य मुख्यविचारः भवति यत् सर्वभौतिकवस्तुः ब्रह्मजगतः पदार्थश्च वास्तविकः भवति । तेषाम् अस्तित्वं दृश्यमानेषु व्यक्तिषु न भवति चेद् अपि तेषु अस्तित्वस्य ज्ञानं न भवति" इति ब्राउन् महोदयः न्यगदत् । शिक्षायां यथार्थवादम् अवगन्तुं यथार्थवादिशिक्षायाः विशेषताः जानीयुः । अस्य प्रमुखविशेषताः अधोलिखिताः –

- विस्तृतः व्यवहारिकः च पाठ्यक्रमः।
- प्राकृतिकतत्वानां सामाजिकसंस्थानाञ्च महत्वम्।
- इन्द्रियः ज्ञानस्य प्रमुखनिर्धारकाः।
- उदारशिक्षायै बलप्रदानम्।
- व्यवसायिकशिक्षायाः महत्त्वम्।

दार्शनिकजगति यान्त्रिकीकरणस्य अतिवादेन मानवतावादः समुद्भूतः । मानववादिशिक्षा मानवकेन्द्रिता भवति। यस्य लक्ष्यं नियते उच्चतरमानवसमाजे उत्तमजीवनयापनं तथा मानवीयसमस्यानां निरन्तरसमाधानमस्ति । शब्दान्तरेण वक्तुं शक्यते यत् मानवस्य नियति निर्धारितप्रक्रियाया अनुसारं मानवीयशिक्षा भवतीति।

## II. पाठ्यक्रमः

पाठ्यक्रमः आधुनिकशिक्षाव्यवस्थायाः महत्त्वपूर्णं तत्त्वमस्ति । आदर्शवादिनः पाठ्यक्रमोपरि विशेषबलम् अयच्छन् । आदर्शवादिनां मते पाठ्यक्रमस्याधारः जीवनस्य सर्वोच्चाधारः भवेत् । पाठ्यक्रमः मानवस्य विचारेषु आदर्शेषु च आधारितो भवेत् । पाठ्यक्रमे सभ्यतायाः प्रतिबिम्बः दर्शयितव्यः। शाश्वतमूल्यानां कृते स्थानं दातव्यम् । शारीरिक-सामाजिक-आध्यात्मिकक्रियाणां कृते अवसरः स्यात्। पाठ्यक्रमः मानवजातेः अनुभवानां प्रतीकरूपेण भवितव्यः, येन मानवजातेः अनुभवानां संघटनं भवेत् । मानवभावेषु तेषां भौतिक-सामाजिकवातावरण-अनुभवाः समागच्छन्ति । अतो अत्र पाठ्यक्रमे मुख्यरूपेण विविधविज्ञानानां मानवशास्त्राणां च स्थानं प्रदातव्यम्। तद्यथा - आध्यात्मवाद-धर्म-नीतिशास्त्र-कला-सङ्गीत-शिल्पविज्ञानानि इत्यादि। अस्मिन् वादे पाठ्यक्रमः विचारकेद्रितो भवेत्।

साम्प्रतिकशैक्षिकपरिदृश्ये प्रयोजनवादस्याधिका उपादेयता भवति । शिक्षायाः समस्तप्रक्रियायां प्रयोजनवादिनामनुसारं पाठ्यक्रमस्य अग्रलिखितविशेषताः स्युः। पाठ्यक्रमे नमनीयता परिवर्तनयोग्यता च भवेत्। पाठ्यक्रमः समाजस्य दर्पणमिव सामाजिकगते पूरकश्च भवेत्। कालदेशानुगुणं पाठ्यक्रमे इतिहासः क्रमिकविकासः समाजशास्त्रं राजनीतिविज्ञानं स्वास्थ्यविज्ञानं कृषिविज्ञानञ्च एतेषां विषयाणां परिवर्तनं भवेत्। पाठ्यचर्यानिर्माणप्रसंगे प्रयोजनवादिभिः निम्नोक्ताः सिद्धान्ताः प्रतिपाद्यन्ते।

- उपयोगिताः सिद्धान्तः (Principle of utility)
- रुचेः सिध्दान्तः (Principle of utility)
- अनुभवस्य सिद्धान्तः (Principle of experience)
- ऐकीकरणस्य सिद्धान्तः (Priciple of intigration)

मानववादानुसारं पाठ्यक्रमः छात्रस्य आन्तरिकजीवने तस्य वैयक्तिकविकासेषु निर्धारकगुणानां बहिरानयनस्य साक्ष्यं भवेत्। पाठ्यक्रमे मानवविकासस्य अवस्थायाः अवधानं स्यात्। पाठ्यक्रमः छात्रस्य योग्यता-अभिरूचि-अधिगमक्षमतानाम् अनुसारं भवेत्। पाठ्यक्रमे मानवीय-आदर्शस्य स्थानं सास्कृतिक-उत्तराधिकाररूपेण भवेत्।

**III. शिक्षणविधयः (Methods of teaching)**

शिक्षणप्रक्रियायां शिक्षकशिष्यशिक्षणसामग्रीभिस्सह शिक्षणविधीनां महत्त्वं भवति । शिक्षणविधिभिः कठिनोऽपि पाठः सारल्येन पाठयितुं शक्यते। अथात्र क्रमशः पाश्चत्यशिक्षादर्शनस्य भिन्न-भिन्नवादानुसारेण शिक्षणविधीनां विमर्शः प्रस्तूयते। अत्र प्राचीनतमः आदर्शवादः किमपि विशिष्टं विधिं न निदिर्शति। लक्ष्यं स्फुटं चेत् तदधिगमाय समुचितो विधिः प्रयोक्तुं शक्यते। कश्चन मार्गः सर्वोत्कृष्टः इति भ्रान्तिरेव। तथापि विधिः तादृशः स्यात्, यः मार्गः शिष्याय भ्रमकारकः न भवेत्। अतः आदर्शवादिनः विभिन्नविधीनां प्रवर्तनं कृतवन्तः -

- सुकरातः - प्रश्नविधिः (Questions Method )
- प्लेटो - वार्तालापविधिः (Conversational Method)
- अरस्तु - आगमन-निगमनविधिः (Inductive and Deductive )
- रेन् डेकार्ट - सरलात् जटिलं प्रति (From Simple to Complex )
- हीगल - तर्कविधिः (Logic method)
- फ्रोबेल - क्रीडाविधिः (Play Method)।
- हरबर्ट स्पेन्सर - निर्देशविधिः (Instruction Method),व्याख्यानविधिः (Lecture Method) वादविवादविधिः(Discussion Method) पुस्तकपठनविधिः (Textbook Method)
- पेस्टालाजी - अभ्यासविधिः (Practice Method) पुनरावर्तनविधिः (Repetition Method), अनुकरणविधिः, अभिनयविधि मुख्यविधयः सन्ति।

प्रकृतिवादिन: छात्रकेन्द्रितशिक्षणपद्धतीनां समर्थनम् अकुर्वन् । तेषां मते शिक्षणं बालकस्य क्रियाणां भावानां च अभिव्यक्तये साहाय्यं प्रदीयेत । प्रकृतिवादिनः प्राचीनशिक्षणपरम्परायाः विरोधिन: भवन्ति । पाठ्यचर्यायां ज्ञानस्य प्राधान्यं नास्ति, अपितु क्रियाया: प्राधान्यम् भवति । **रूसो** (Russo) महोदयः कृत्वाधिगम: (Learning by Doing) इत्यस्य बलं दत्तवान्। प्रकृतिवादिशिक्षणपद्धतिषु ह्यूरिटिकपद्धतिः, डाल्टन्-पद्धतिः, मान्टेसरीपद्धतिः, निरीक्षणपद्धतिः, प्रयोजनापद्धतिः प्रत्यक्षपद्धतिश्च अन्तर्भवति । शिक्षणविधिनां सन्दर्भे प्रयोजनवादः शिक्षणप्रक्रियां सुष्ठु उपकरोति । अयं परम्परागतशिक्षणविधिन् न स्वीकरोति । **रॉस**महोदयानुसारं प्रयोजनवादिशिक्षायाम् अस्माभिः प्राचीन-

विचार-प्रक्रियाभ्यः शैक्षिकव्यवहारे प्रमुखं स्थानं न देयम्, अपितु नूतनदिशायां पदसञ्चालनं करणीयम्, इति । प्रयोजनवादिनां मते शिक्षणविधीनां सन्दर्भे विधिषु नूतनः प्रयोगः करणीयः । शिक्षायाः उद्देश्यपूर्णप्रक्रियासिद्धान्तः, क्रिया-अनुभवाधारिताधिगमसिद्धान्तः शिक्षणप्रक्रियाया एकीकरणस्य सिद्धान्तश्च पालनीयः । पाठ्यविषयेषु कदाचित् आन्तरिक-सामाजिकमूल्यानां ह्रासः भवति । अस्य परिवर्तनस्य विशेषकारणं शिक्षणविधयः एव भवन्ति । अतः शिक्षणे उत्तमविधीना चयनं करणीयम् । शिक्षणविधिः वस्तुनिष्ठज्ञानमाधारिकृत्य निर्मातव्यः । विषयस्य स्पष्टीकरणं शिक्षणस्य कथने निर्भरति । प्रत्यक्षप्रमाणे बलधिक्यं स्यात् । शिक्षणविधिषु छात्राणां तर्क-विवेक-विश्लेषणादीनां समर्थनं भवेत् ।

## IV. शिष्यः (Student)

**हाँन**महोदयानुसारं बालकः एकः परिमितः व्यक्ति अस्ति, यः शिक्षितो भूत्वा अनन्तपुरूषरूपेण विकसितः भवति । तस्य वास्तविक उद्भवः देवत्वमिव भवति । तस्य प्रकृतिः स्वतन्त्रा भवति, तथा च तस्य नियति अमरत्वं भजति । आदर्शवादिशिक्षायां आदर्शस्य विचारस्य च क्रेद्रस्थानं भवति । आदर्शवादिनामनुसारं शिक्षकस्य मुख्यं कर्तव्यं वर्तते यत् सः बालके आदर्शसम्पादनाय तस्य ज्ञानस्य विकासं कुर्यात् । शिक्षणस्य पाठ्यक्रमस्य निर्माणमपि आदर्शस्याधारेण क्रियते । अतः आदर्शवादिशिक्षाव्यवस्थायाम् आदर्श-विचारयो अपेक्षया बालकस्य गौणस्थानं मन्यते । प्रकृतिवादिशिक्षायां बालकस्य शारीरिकपक्षस्य विकासाय अधिकं बलं दीयते । तत्र शरीरात् परम् अन्यत् किमपि उच्चतरं तत्वं न स्वीक्रियते । प्रकृतिवादिनां मते मनुष्यः केवलं प्राणि: मन्यते, न तु आदर्शवादमिव अनन्तपुरुषस्यावधारणाऽत्र अङ्गीक्रियते । रूसो द्वारा बालकः ईश्वरस्य पवित्रकृति: मन्यते । तस्यानुसारं प्रकृतितः यत्किमपि वस्तु अस्माभिः प्राप्यते, तत् पवित्रमेव भवति, परन्तु मनुष्यस्य सम्पर्केन तस्मिन् विकारादिकं परिवर्तनं भवति । स: बालकं बालक एव मनुते, न तु लघुवयस्कः । प्रयोजनवादे बालकस्य स्थानं प्रमुखं भवति । प्रयोजनवादिनां मते बालकः सत्यस्य मूल्यस्य च स्वयं निर्माता भवति । बालकः वातावरणे स्वीयशक्तीनां विकासः करोति । बालकः स्वीयानुभवेन वातावरणे परिवर्तनमपि कर्तुं शक्नोति । बालकः समस्यायाः चयनं, तदुपरि निर्णयः, तस्या मूल्यांकनञ्च स्वयं करोति । तत्र अध्यापकः केवलं साहाय्यं करोति । छात्रस्य जीवनं प्रयोगद्वारा स्वयं विकासोन्मुखः भवेत् । बालक अपि पूर्णमनुष्यः भवति । सः समुचिते विद्यालयीयपरिवेशे सक्रियो भूत्वा परिवर्तनशीलप्रपञ्चे स्विकासार्थं शक्ति प्राप्नुयात् । यथार्थवादानुसारं संपूर्णशिक्षाप्रकियायां छात्रस्य सर्वाधिकमहत्वं वर्तते । अतः यथार्थवादिशिक्षा छात्रकेन्द्रिता भवति । अस्यां शिक्षाप्रकियायां छात्रेभ्यः महत्त्वपूर्णस्थानं दीयते । शिक्षणे छात्रस्य भावनानां शक्तीनाञ्च समादरः भवेत् । छात्रः विवेकपूर्वकम् अधिगमेन यथार्थस्य समीपे गन्तुं प्रयत्नं कुर्यात् । छात्रस्य विकासायः अधिकाधिकस्वतन्त्रता प्रदेया । तस्य मतिः सिद्धान्तानाम् अपेक्षया व्यावहारिकज्ञाने भवितव्या । कल्पनायाः अपेक्षया तथ्याधारितं ज्ञानं प्राप्तुं छात्रः प्रयतेत् । मानववादी दर्शनं छात्रस्य व्यक्तित्वम् अद्भुतं मनुते, यः स्वीयनियतेः निर्माणं स्वयमेव कर्तुम् अर्हति । अस्मिन् दर्शने बालकस्य व्यक्तित्वे कानिचन

प्रमुखतत्वानि स्वीक्रियन्ते। तद्यथा– भौतिकशरीरं धारणं कृत्वा प्राणी यस्य संवेदनशील-इन्द्रियमस्ति, तथा विकसितं मस्तिष्कं भवति । तस्य मानसिकसंरचना आंशिकरूपेण वंशानुगतं तथा आधिक्येन वातावरणप्रभाविता भवति। सामाजिकपरिवेशः व्यक्तित्वस्य विकासाय साधनरूपेण कार्यं करोति। येन बालकस्य सामाजिकविकासक्षेत्रे साहाय्यमपि भवति।

## V. शिक्षकः (Teacher)

आदर्शवादिनः शिक्षकेभ्यः बहुमहत्वं यच्छन्ति । आदर्शवादिनामनुसारं शिक्षकेन विना सचारुरूपेण शिक्षणप्रक्रियायाः संचालनं भवितुं नार्हति। बालकः पूर्णं भवति, यः पूर्णतया मार्गे अग्रसरः भवति । तत्र शिक्षकः तस्य मार्गदर्शनं करोति । आदर्शवादिनः शिक्षकानां गुणानां योग्यतानां विस्तृतं विवेचनं कुवन् वदन्ति – शिक्षकः बालकस्य सत्तायाः साकारं स्वरूपं भवति । शिक्षकः चरित्रवान् विषयविशेषज्ञः, कलानिपुणः, निरन्तरमध्ययनरतः स्वकीयव्यावसायिककलायां दक्षश्च भवेत् । शिक्षकः स्वकीयच्छात्राणां मित्रम्, मार्गदर्शकः तथा च दार्शनिकः भवेत्। शिक्षकः छात्रेषु अधिगमं प्रति रुच्युत्पादने सक्षमः स्यात् । प्रकृतिवादिशिक्षायां शिक्षकस्य स्थानं गौणं भवति । प्रकृतिवादिनामनुसारं प्रकृति एव बालकस्य उत्तम: शिक्षकः भवति। तैः बालकस्य शिक्षायां शिक्षकस्य कोऽपि हस्तक्षेपस्य आज्ञा न दीयते। शिक्षकः बालकस्योपरि स्वकीयं प्रभावं दातुं प्रयत्नं न कुर्यात् । तेषामनुसारं शिक्षकः बालकस्य स्वाभाविकविकासाय अनुकूलपरिस्थितेः निर्माणं कुर्यात्। **रॉस**महोदय उवाच – 'यदि शिक्षकस्य किमपि स्थानम् अस्ति तर्हि सः रङ्गमञ्चस्य सम्पादक एव न तु स्वयं नटः' । प्रकृतिवादस्यानुसारं शिक्षकः बालकोचितपरिवेशं निर्माय बालकेषु समुचिताचराणां विकासार्थं साहाय्यं कुर्यात् । विकासबाधकानि सामाजिकबन्धनानि दुरीकुर्यात्।

मानववादः प्रकृतिवादस्य यान्त्रिकीकरणस्यातिवादस्य विरोधे उद्भूतः। यान्त्रिकीकरणेन मानवस्य अत्यन्त-उपेक्षा जाता । शिक्षाप्रक्रियायां शिक्षकस्य स्थानमपि अन्त्यन्तं गौणतामुपागतम् । मानववादे शिक्षकेषु केचन विशिष्टगुणाः स्युः । शिक्षकः मानवीयगुणेषु उत्तमः स्यात् । शिक्षकेषु वैज्ञानिकविधिनां ऐतिहासिकप्रक्रियायश्च समुचितं ज्ञानं स्यात् । शिक्षकः सम्पूर्णमपि विश्वम् एकेन परिवाररूपेण पश्येत् । शिक्षकः बालकस्य बहुमुखिविकासे सहायताप्रदानं कुर्यात्। यथार्थवादस्यानुसारं शिक्षकस्य स्वस्य विशेषं चरित्रं दृष्टिकोणञ्च भवति। यथार्थवादानुसारं शिक्षकस्य विज्ञाने पूर्णविश्वासः स्यात्। शिक्षकः प्रत्येकं वस्तुनः वैज्ञानिकदृष्टिकोणम् अवगच्छेत् । सः वैज्ञानिकविधिना अन्वेषितं ज्ञानं प्राप्तुं प्रयत्नं कुर्यात् । वैज्ञानिकरीत्या छात्राणामावश्यकतानां पूर्तिः रूचीनां विकासश्च कुर्यात् । यथार्थवादिशिक्षकः बालमनोविज्ञानस्य किशोरमनोविज्ञानस्य च ज्ञाता स्यात्।

## VI. पाठ्यक्रमः

आदर्शवादः विचाराणां प्राधान्यं स्वीकरोति । अतः तस्य पाठ्यक्रमः विचारकेन्द्रितः भवति । पाठ्यक्रमः छात्रेषु उत्तमगुणानां सम्पादने, उत्तमनागरिकस्य विकासे च सहायकः भवेत्। तत्र भाषा-विज्ञान-

धार्मिकशिक्षादीनां प्रामुख्यं भवति । प्रकृतिवादः बालकान् पाठ्यक्रमस्य आधारभूतं मनुते । अतः पाठ्यक्रमस्य निर्माणं बालकस्य रूचि-योग्यता-स्वाभाविकक्रियाणाम् अनुसारेण भवेत् । तेषामनुसारं पाठ्यक्रम: तादृशं भवेत्, येन बालकस्य विभिन्नविकासावस्थानाम् आवश्यकताया: पूर्तिः भवेत् । या: आवश्यकता वर्तमाने तथा वास्तविकजीवने भवति । प्रकृतिवादानुसारं पाठ्यक्रमे सर्वेषु विषयेषु विज्ञानं केन्द्रीयविषय: भवेत् । तत्र जीवनरक्षा सम्बधितविषयाणां कृते प्राधान्यं स्यात् । बालकस्य रुचि-योग्यता-स्वाभाविकक्रियाणां विकासाय पर्याप्तं स्थानम् स्यात् । यथार्थवादस्यानुसारं पाठ्यक्रमः संपूर्णशिक्षाप्रक्रियायाः केन्द्रबिन्दुः भवति । यस्मिन् जीवनस्य आधारभूताः विविधाः विषयाः भवन्ति । प्रत्येकविषयस्य स्वीय-आत्ममूल्यानि सामाजिकमूल्यानि च भवन्ति । अतः यथार्थवादिदृष्टिकोणानुसारं पाठ्यविषयाः विविधतायुक्ताः विस्तृताश्च भवेयुः । छात्राणां कृते सर्वाधिकोपयोगिविषयाः पाठनीया । विषयचयनस्य कार्यं शिक्षकस्य अभिभावकस्य च साहाय्येन भवेत् । चिताः विषयाः परस्परसम्बन्धाः भवेयुः । सामाजिकावश्यकतानाम् अनुरूपमेव विषयाः चेतव्याः । ज्ञानं ज्ञानार्थम् इति मत्वा अनुपयोगी विषयाः न स्वीकर्त्तव्या । विज्ञानं यथार्थजगतः परिचयं कारयति, अतः विज्ञानस्य अनिवार्यशिक्षणं स्यात् ।

इत्थम् उपर्युक्तरीत्या अस्माभिः भारतीय-पाश्चात्यदर्शनयोः अनुसारं विभिन्नशैक्षिकतत्त्वानां विमर्शः कृतः । यत्र स्पष्टतया अवलोक्यते यत् भारतीयदर्शनपरम्परायां शिक्षा ज्ञानं वा आत्मानुभूतये मोक्षप्राप्तये च भवति, पाठ्यक्रमः ज्ञानाधारितः भवेत्, शिक्षकः प्रमुखः ज्ञानप्रदाता, छात्रः जिज्ञासु गुर्वाज्ञापालकः, शिक्षणविधिश्च व्याख्यान-प्रश्न-तर्काधारितः भवेत् । पाश्चात्यमते शिक्षा मानवीयगुणानां सर्वाङ्गीणविकासाय भवति, पाठ्यक्रमः छात्रस्य आवश्यकतानां पूर्तये, शिक्षकः मार्गदर्शकः, छात्रः शिक्षणप्रक्रियायाः केन्द्रबिन्दुः, शिक्षणविधयश्च सारल्येन अधिगमसम्पादने सक्षमाः भवेयुरिति ।

**********

**सन्दर्भग्रन्थाः**

1. त्यागी, डॉ. गुरुसरणदास, भारतीय शिक्षा का परिदृश्य, श्री विनोद पुस्तक मन्दिर, आगरा ।
2. पाठक, पी. डी.; त्यागी, गुरुसरनदास; शिक्षा के सामान्य सिद्धान्त, श्री विनोद पुस्तक मन्दिर, आगरा ।
3. पाण्डेय, के. पी., शिक्षा के दार्शनिक एवं सामाजिक आधार, विश्वविद्यालय प्रकाशन वाराणसी ।
4. साहु, सोमनाथ, शिक्षायाः दार्शनिकाधाराः, जगदीश संस्कृत पुस्तकालय, जयपुर ।
5. पाण्डेय, आर. एस., शिक्षा दर्शन, श्री विनोद पुस्तक मन्दिर, आगरा ।

# आधुनिकभारते संस्कृतशिक्षणस्य आवश्यकता उपहुतयश्च

कुन्तकवर्गः

**परियोजनाकार्यस्य मार्गदर्शकः**

**डॉ. कुमारः**

**परियोजनाकार्यस्य सदस्याः**

1. सञ्जिता परिडा 2. सुहासिनी साहु
3. शुभश्री बेहेरा, 4. सुकन्या
5. रश्मिता राउत 6. प्रलयदासः

**परियोजनाकार्यमुद्दिश्य किञ्चित्प्रास्ताविकम् –**

शिक्षा नाम छात्रस्य सर्वाङ्गीणविकासात्मकप्रक्रियेति सर्वविदितम् । अत एव उत्तमशिक्षकनिर्माणोद्देश्येन शिक्षाविभागेऽत्र अधीयानानां छात्राध्यापकानां सर्वविधकौशलविकासाय विविधप्रायोगिककार्यमायोज्यते । तेष्वन्यतमं कार्यमिदं परियोजनाकार्यम् । अस्मच्छात्राः संस्कृतशिक्षणं प्राप्य विभिन्नप्रदेशेषु भविष्यति कार्यं करिष्यन्तीत्यतः आधुनिककाले बहुप्रचलितस्यास्य संस्कृतस्य आवश्यकताम् उपहुतिं च ज्ञात्वा गवेषणात्मकपरियोजनां कृत्वा लेखमेकं सज्जीकुर्युः इति कार्यमिदं कारितम् । अनेन छात्राध्यापकानां गवेषणशक्तिः, लेखनसामर्थ्यम्, समूहे कार्यकरणम्, सङ्गणकस्य प्रयोगज्ञानम्, आधुनिककाले संस्कृतशिक्षणस्य परिचयः इत्यादीन्यनेकान्युद्देश्यानि सेत्स्यन्ति । कथमिदं कार्यं करणीयमिति सकालिकं सम्यग्मार्गदर्शनं प्राप्य सोत्साहं छात्राध्यापकाः स्वयमेव परियोजनाकार्यं कृत्वा समर्पितवन्तः इति वक्तुं मार्गदर्शको भूत्वा मे चेतः नितरां तुष्यति । अनेकान् ग्रन्थान्नवलोक्य विषयसङ्ग्रहं कृत्वा स्वकीयभाषया षण्णां छात्राध्यापकानां गणोऽयं लेखमिदं विलिख्य प्रकाशनयोग्यं चाकरोदिति सन्तोषं शुभकामनाः वदामि ।

**प्रस्तावना -**

विश्वस्य उपलब्धासु सर्वासु भाषासु संस्कृतभाषा प्राचीनतमा भाषा अस्ति । इयं भाषा अनेकासां भाषाणां जननीति कथ्यते । प्राचीनयोः ज्ञानविज्ञानयोः निधिः अस्यां भाषायां सुरक्षितः । संस्कृतं नाम ‘सम्यक् कृतम्’ इति । यत् परिष्कृतं, परिशुद्धम्, व्याकरणादिदोषरहितं तत् संस्कृतम् । सम् इत्युपसर्गपूर्वक - कृञ् धातोः क्त प्रत्यये सति सुडागमे संस्कृतमिति शब्दः निष्पन्नो भवति । संस्कृतानां भाषा, संस्कृता च सा भाषेति इति द्विधा विग्रहवाक्यं वर्त्तते ।

इयं संस्कृतभाषा अतीव वैज्ञानिकी । केचन कथयन्ति; यत् संस्कृतमेव संङ्गणकस्य कृते सर्वोत्तमा भाषा। अस्याः वाङ्मयं वेदैः, पुराणैः, नीतिशास्त्रैः चिकित्साशास्त्रादिभिश्च समृद्धमस्ति । कालिदासादीनां विश्वकवीनां काव्यसौन्दर्यम्; कौटिल्यार्थशास्त्रम्, आर्यभट्टस्य गणितशास्त्रं, चरकसुश्रुतयोः चिकित्साशास्त्रं चेत्यादीनां योगदानं विश्वप्रसिद्धमस्ति । संस्कृते विद्यमानाः सूक्तयःअभ्युदयाय प्रेरयन्ति, यथा- **सत्यमेव जयते, वसुधैव कुटुम्बकम्, विद्ययाऽमृतमश्नुते, योगः कर्मसु कौशलमित्यादयः** । संस्कृतभाषायां

धार्मिकसाहित्यमपि वर्त्तते। संस्कृतग्रन्थेषु मानवजीवनाय विविधाः विषयाः समाविष्टाः सन्ति। महापुरुषाणां मतिः, उत्तमजनानां धृतिः, सामान्यजनानां जीवनपद्धतिश्चेत्यादयः वर्णिताः । अतः सर्वैः संस्कृतमवश्यमेव पाठनीयं भवेत्।

अस्याः भाषाया: महती उपयोगिता विद्यतेतराम् । कपाटिकाम्पूर्णं संस्कृतसाहित्यंयम् उपदेशं ददाति यदनेन न केवलं भारतीयानाम् अपितु; सम्पूर्णमानवसभ्यतायाश्च हितं भवितुमर्हति। अद्यापि विभिन्नदेशेषु संस्कृतस्य बहव: शब्दा: प्रचलिता: वर्तन्ते। सर्वे विदेशीया: अपि अस्या: भाषाया: सम्मानं कुर्वन्ति।

ब्रिटीषशासकानाम् आगमनात्पूर्वं संस्कृतभाषाया: पठनं पाठनं च समस्तदेशे आसीत् । लक्षाधिकाश्चछात्रा: संस्कृतस्य अध्ययनं कुर्वन्ति स्म । इदमेव कारणं यत् संस्कृतभाषा स्वयमेव सरला सुमधुरा सुललिता च वर्तते । सम्प्रति संगणकयुगमस्ति । अस्मिन्युगे "कम्प्यूटर" नामकयन्त्रस्य महत्त्वं सुविदितमेव। वैज्ञानिकैश्च अस्य यन्त्रस्य कृते संस्कृतभाषाया: आनुकूल्यं सर्वथा उदघोषितम्। अत: भविष्ये कम्प्यूटर यन्त्रचालनाय अस्या: भाषाया: मर्मज्ञः आवश्यकः भवेत् इति मन्यते । संस्कृतमेका वैज्ञानिकी भाषा। अत: सर्वेषां कृते अस्यां भाषायां शिक्षणं अत्यन्तम् आवश्यकमस्ति।

**संस्कृतशिक्षणस्य आवश्यकता** (The Need of Sanskrit teaching)

संस्कृतभाषा स्पष्टा, शुद्धा, दोषरहिता, सरला, गम्भीरा, वैज्ञानिकी चास्ति । सम्प्रति वैज्ञानिकयुगे संस्कृतशिक्षणस्य आवश्यकता भाषाशिक्षाया: उद्देश्यपूरणार्थं वर्तते । इयं भाषा आसेतुहिमालयं विचार-विनिमयस्य भाषा भवितुमर्हति। सम्प्रति संस्कृतस्य का आवश्यकता वर्तते इति चर्च्चा विधीयते।

1. **वसुधैव-कुटुम्बकमिति भावनाविकासार्थम्।**

संस्कृतभाषायां वसुधैवकुटुम्बकम् इति भावनाया: सम्बद्धश्लोका: बहव: सन्ति । वैदिककालादारभ्य आधुनिककालं यावत् सर्वत्र एतादृशभातृत्वभावना: विलसन्ति एव। संस्कृतभाषां विना इतरभाषासु कुत्रापि एतादृशी लोकोत्तरभावना: न परिदृश्यन्ते । संस्कृतभाषाया: विश्वबन्धुत्वभावना एव वर्तते । उदारचेता: विश्वमेव कुटुम्बमिव भावयति । समाजे यानि भूतानि सन्ति, तानि आत्मवत् भावयति । विश्वस्मिन् विद्यमाना: सर्वे सुखिन: स्यु:, सर्वे निरोगिण: भवन्तु, कोऽपि दु:खं न प्राप्नुयात् इति वर्णितम् । मानवेषु उदारता, सहिष्णुता, दया, कृपा आदीनां विश्वबन्धुत्त्वभावनाविकासाय संस्कृतशिक्षणस्यावश्यकता वर्तत एव।

**2. भारतीयभाषाणां संरक्षणार्थं संस्कृतशिक्षणस्यावश्यकता।**

लोके विद्यमानानां सर्वासां भाषाणां संस्कृतभाषा जननीति, कासाञ्चन प्रादेशिकभाषाणां च पोषिका इत्युच्यते। सर्वेषां ज्ञानमावश्यकं "संस्कृतभाषायां सार्वभौमिकता वर्तते इति। मानवपरिवारेव भाषापरिवारे अपि परिवारान्तर्गतभाषाणां शब्दावलिः, पदरचना, सम्बन्धः, समादृश्यं च दृश्यते । भारतीयसंविधानस्य पंचत्रिंशत्तमे अध्याये संस्कृत – हिन्दी – मैथिली – असमिया – बंगाली – बोडों – डोगरी - गुजराती – कश्मीरी – कोंकणी - मणिपुरी – मराठी – नेपाली - ओडिआ – पंजाबी – संथाली – सिन्धी –उर्दू च

अष्टादशभाषा: भारोपीय परिवारान्तर्गता सुमान्या: सन्ति । संस्कृतं सर्वासां भारोपीयभाषाणां जननी अस्ति। भारतीयभाषासु प्रयुज्यमानानि बहुशः पदानि संस्कृतमूलकानि । यदि भारतीयभाषाणां संरक्षणमिच्छामश्चेत् तर्हि संस्कृतस्य संरक्षणमाद्य कर्तव्यम् । अत एव संस्कृतशिक्षणस्य आवश्यकता वर्तते ।

**3. शैक्षिकविकासार्थं संस्कृतशिक्षणस्यावश्यकता ।**

संस्कृतस्य साहित्यं सुविशालं वर्तते । साहित्यग्रन्थानां विस्तृततया पठनम् । कवितारचनायाः दक्षता, साहित्यस्पर्धासु भावग्रहणम्, निबन्धरचनम्, रसभेद – शैलीभेदानां च सम्पादनम् । विविधव्याकरणांशानाम् - अचां, हलां, आत्मनेपद – परस्मैपद - उभयपदानां च ज्ञानम्, कालादीनां तद्भेदानां च विवरणम्, क्रियाणां ज्ञानसम्पादनम् एतानि सर्वाणि संस्कृत-भाषामवलम्ब्य एव सम्यक् ज्ञातुं शक्यते । सन्धिगतपदानां योजनं विभाजनं च, विग्रह – समास - ज्ञानसम्पादनम् । प्रकृति – प्रत्यययोरन्तरज्ञापनम्, कृत्तद्धित – लकारार्थ – ज्ञानम्, नाम, सर्वनाम – अव्यय – उपसर्ग – वचन – लिंग – विभक्त्यादीनां ज्ञापनम् इत्यदयः अनेके शैक्षिकविषयाः इतरभाषासु विद्यमानाः अपि ज्ञातव्याः चेत् संस्कृतशिक्षणस्य आवश्यकता वर्ततेतराम् ।

संस्कृतस्य साहित्यं शैक्षिकविकासेन सुसम्बद्धं वर्तते । संस्कृतवाङ्मये गद्य – पद्य – चम्पू – नाटकादि-विविधसाहित्यरुपेण उपलभ्यते । एतदतिरिच्य ज्योतिषम् – गणितम् – दर्शनम् – नीतिः – इतिहासादिविषयेषु सहस्रशः ग्रन्थान् व्यरचयन् मुनयः । संस्कृतकाव्यशास्त्रविषयग्रन्था: भूरीशो अनूदिता: सन्ति । संस्कृतसाहित्ये पञ्चमहाकाव्यानि अतिप्रसिद्धानि १. रघुवंशम्, २. कुमारसम्भवम्, ३. नैषधीयचरितम् ४. किरातर्जुनीयम्, ५.शिशुपालवधम्, गद्यकाव्यानि – कादम्बरी, हर्षचरितम्, वासवदत्ता इत्यादीनि, नाटकानि- अभिज्ञानशाकुन्तलम्, उत्तररामचरितम्, मृच्छकटिकम् इत्यादीनि अद्यतनशिक्षणे आवश्यकानि इत्यतः संस्कृतशिक्षणस्य आवश्यकता वर्तते ।

**4. बौद्धिकविकासार्थम् आध्यात्मिकनैतिकज्ञानार्थं संस्कृताध्यापनस्य आवश्यकता ।**

संस्कृतभाषायाः शिक्षणं शिक्षार्थिनां बौद्धिकविकासस्य आधारः भवितुं शक्नोति । ज्ञानविज्ञानदृष्ट्या संस्कृतस्य साहित्यम् अत्यन्तं समृद्धं वर्तते । मानवहृदयेषु यावत् नैतिकताया विकास: न सम्भवति । तावत् समाजस्य प्रगति: न भवति । आत्मा५ वा अरे श्रोतव्य:, द्रष्टव्य:, मन्तव्य:, निधिध्यासितव्यः इत्युक्तम् । आत्मज्ञानजन्यशक्तिरेव शिक्षायाः सारभूतं तत्त्वम् । अत एवोच्यते "या विद्या सा विमुक्तये", "विद्ययाऽमृतमश्नुते", "विद्ययाविन्दतेअमृतम्" इत्यादीनामाधारेण संस्कृताध्यापनेन बौद्धिक – आध्यात्मिक – नैतिक - विकास: सम्भवति । संस्कृतादतिरिक्तं न कुत्रापि नैतिकताया: विवेचनं लभ्यते । अत: मानवस्य नैतिक - बौद्धिकवृद्ध्यर्थं संस्कृतभाषासाहित्यस्य महत्त्वपूर्णं योगदानमस्ति । यथा -

* सृष्टिकर्त्तु: महत्वज्ञापनम् ।
* सर्वे वेदांशसम्भूता इति भावोत्पादनम् ।
* वैदिक-लौकिकग्रन्थेषु भक्तिमार्गप्रकारकथनम् ।
* देव-जीवियोर्मध्ये यथार्थज्ञानयो: परस्पर-वैरुध्यकथनम् ।
* आध्यात्मिकं नैतिकं च ज्ञाननिवेदनम् ।

* पुण्य-पाप-विवेचनं तु संस्कृतभाषाज्ञानेन एव सम्भवति ।

**5. चरित्रनिर्माणे संस्कृताध्यापनस्य आवश्यकता: ।**

प्रत्येकं मानवस्य जीवने उत्तमचरित्रस्य अनिवार्यता विद्यते । चरित्रहीनता मानवजीवनं क्लिष्टतायां पातयति । चरित्रवान् व्यक्तिविशेषः उत्तमसमाजिकः आचारवन् आदरणीयश्च भवति । एतदर्थं चरित्रनिर्माणं परमावश्यकमस्ति । चरित्रनिर्माणे संस्कृताध्यापनस्य महत्त्वपूर्णं स्थानं वर्तते । शिक्षाया: एव आत्मन: साक्षातकारो भवति । शिक्षया जन्मजातशक्तीनां विकासो भवति । सम्पूर्णव्यक्तित्वस्य विकासस्तु चरित्र निर्माणेन सम्भवति । अत: चारित्रिकबसंवर्धनमपि संस्कृताध्यापनेन अध्ययनेन च सम्भवति । उदाहरणार्थम् -

**अभिवादनशीलस्य नित्यं वृद्धोपसेविनः ।**
**चत्वारि तस्य वर्धन्ते आयुर्विद्या यशो बलम् ॥**
**मातृवत्परदरेषु परद्रव्येषु लोष्ठवत् ।**
**आत्मवत्सर्वभूतेषु य: पश्यति स पण्डित: ॥**
**एतद्देशप्रसूतस्य सकाशादग्रजन्मन: ।**
**स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥**

**6. भावात्मकविकासार्थं आनन्दानुभूत्यर्थं रसानुभूत्यर्थं च संस्कृताध्यापनस्य आवश्यकता ।**

चमत्कृतश्लोकानां गद्यखण्डानां च आनन्दनुभूतिसम्पादनम् । गद्यपद्येषु वाच्यतया व्यंगतया विद्यमानस्य भावग्रहणसामर्थ्यसम्पादनम् । रमणीयश्लोकानां गद्यखण्डानां च कण्ठस्थीकरणम् । रमणीयसुभाषितानां सूक्तीनां लोकगीतानां प्रहेलिकानां सन्दर्भानुरुपं प्रयोगकरणम् । कवितारचनासु रसभेदज्ञानम्, पाठ्यांशेषु तन्मयत्वसम्पादनम् । अलंकारविशिष्टता- ग्रहणम्, ध्वनिज्ञानसम्पादनम्, शैलीभेदं प्रदर्श रसपरिवर्तनम् । मनोविनोदस्यापि उत्तमं साधनं वर्तते संस्कृतसाहित्यम् । संस्कृते काव्यसाहित्यं, सुभाषितानि सूक्तयः, हास्यकथा: इत्यादिनां सर्वेषां भाण्डागारः वर्तते, यस्याध्ययनेन पर्याप्तं मनोरञ्जनम् अपि भवितुं शक्यते । यथोक्तं नीतिशास्त्रे -

**काव्यशास्त्रविनोदेन कालो गच्छति धीमताम् ।**
**व्यसनेन च मूर्खाणां निद्रया कलहेन वा ॥**

हितोपदेश:, पञ्चतन्त्रम् इत्दयादिग्रन्थाः कथामाध्यमेन मनोरञ्जनं जनयन्ति । अत: आधुनिकभारते आनन्दानुभूति: रसानुभूति संवर्धनाय संस्कृतशिक्षणस्य आवश्यकता महत्त्वपूर्णमस्ति ।

**7. आत्मानुशासनार्थं संस्कृतशिक्षणस्य आवश्यकता** ।

यदि छात्रेभ्यः अधिकस्वतन्त्रता प्रदीयते तर्हि अध्यापकानां शिरस्युपविश्य अननुशासनरता: भवेयुः । कक्ष्यायां नियन्त्रणार्थं सैनिकानुशासनं दण्डनात्मकम् अनुशासनं वा स्थापयाम: तर्हि छात्रा: संशयग्रस्ताश्च भवेयु: । अत: आत्मानुशासनं स्थापनीयम् । शिक्षणे सामर्थ्यम्, असाधाराणपाण्डित्यम्, उत्तमव्यक्तित्वम्, आदर्शचरित्रम्, इत्यादिनां गुणानां माध्यमेन कक्षायां आत्मानुशासनं स्थापनमेव उत्तमम् । नियमानां

अधिकारिणां प्रति आज्ञाकारिता एव अनुशासनम् । आंगले (Disciple) शब्द: भवति । यस्यार्थ: वर्तते - "संस्थायां प्रकल्पितनियमानाम् अनुपालनमिति" । आज्ञा गुरूणाम् अविचारणीया इति भावनया शिक्षकाणाम् आदेशपालनमेव अनुशासनम् । सम्यक् शिक्षणमेव छात्रेषु आत्मविश्वासं संवर्धयति । आत्मविश्वासेन आत्मानुशासनं दृढीभवति । अत: आधुनिकभारते आत्मानुशासन–संबर्धनार्थं संस्कृताध्यापनस्य महत्वं विद्यते । सुसंस्कृतभाषायाः अस्याः अध्ययनेन छात्रेषु उत्तमानुशासनसम्पादनम् आत्मविश्वासं च कर्तुं शक्यते इत्यत्र न संशयः ।

**8. वैज्ञानिकभाषारूपेण संस्कृताध्यापनस्य आवश्यकता विद्यते ।**

संस्कृतसाहित्ये भौतिकविज्ञानस्य प्रवर्तक: ऋषिवर: कणाद: आसीत् । रसायनशास्त्रस्य वर्णनमपि संस्कृतसाहित्ये वर्तते । नागार्जुनेन 'रसरत्नाकर:' इत्यस्मिन् ग्रन्थे गंधकस्य शोधनविधे: वर्णनं कृतमस्ति । आयुर्वेदशास्त्रे विभिन्नौषधीनां प्रयोगस्य वर्णनं लभ्यते । कौटिल्यस्यार्थशास्त्रं राजनीत्या: प्रमुख: ग्रन्थो वर्तते। संस्कृतसाहित्ये विभिन्नां यन्त्राणां प्रयोगो समुपलभ्यते । कौटिलस्य अर्थशास्त्रेऽपि यन्त्राणां वर्णनं लभ्यते । रावणस्य पुष्पकविमानस्य वर्णनमपि रामायणे प्राप्यते । भारद्वाजेन 'सर्वस्व' नामक रचना विरचिता, या च भौतिकविज्ञानस्य एका रचना वर्तते । संगणकयन्त्रं, गतिशीलोपकरणं चास्ति येन केषुचित् निमेषु गणना: गणीतीयप्रक्रियाश्च कर्तुं शक्यन्ते । अत एव संगणकयन्त्रं नियमानाम् अनुसरणकर्ता कथ्यते । एतस्या ज्ञानसंञ्चारविधिक्रान्ते: कश्चनान्तरंग: सम्बन्ध: संस्कृतभाषया सह समुपलभ्यते । अमरीकीयेन वैज्ञानिकेन 'नासा' NASA स्थले कार्यरतेन रिक ब्रिग्स Rik Briggs इत्याख्येन समुद्घोषितं यत् संस्कृतभाषा खलु विश्वभाषासु कम्प्यूटरविधे: कृते सर्वाधिकमुपयुक्ता अनुकूला चेति ।

संस्कृतभाषा वैज्ञानिकभाषा वर्तते । संस्कृतस्य व्याकरणं मनोवैज्ञानिकं विश्वप्रसिद्धं च वर्तते । मस्तिष्कयन्त्रस्य कृते बहूपयोगिनी अनुकूला च वर्तते भाषेयम् । ज्ञानं, विज्ञानं, समाजशास्त्रं, दर्शनं, चिकित्साशास्त्रं, गणितं, ज्योतिषम्, इत्यादिशास्त्राणां सामाजिका:, राजनैतिका:, वैज्ञानिकाश्च ग्रन्था: संस्कृतभाषायां सन्ति । अस्माकं जीवने जम्नत: मृत्युपर्यन्तं षोडशसंस्कारा: संस्कृतभाषायामेव सम्पन्नाः भवन्ति । "विद्वान् सर्वत्र पूज्यते"- विद्वांस: एव लोके अस्मिन् चक्षुष्मन्तः प्रकीर्तिता: । "विद्या विहीनः पशु:"। अध्ययनेन कार्यानुभवेन च ज्ञानानुभवः प्राप्यते । ज्ञानानुभवसंवर्धनार्थं आधुनिकभारते संस्कृतशिक्षणस्य आवश्यकता अत्यधिकं वर्तते ।

आदर्शव्यक्तित्वम्, चरितम्, आत्मानुशासनम्, अनुभूतिम्, ज्ञानम्, भारतीयभाषासंरक्षणं, राष्ट्रिय – अन्ताराष्ट्रियैकयताम्, सर्वकल्याणम्, परोपकारबुद्धिम्, संस्कृतिसंरक्षणम् इत्यादीनां प्राप्तये संस्कृतस्य शिक्षणम्, अध्ययनं च नितरामपेक्षितं भारते इति निष्कर्षः ।

संस्कृतशिक्षणमावश्यकमिति सत्यमेव । परं तत्र तच्छिक्षणस्य उपहुतयः अर्थात् पन्थाह्वानानि बहूनि सन्त्येव इत्यपि सत्यमङ्गीकर्तव्यमेव । संस्कृतस्य प्रचार-प्रसारकरणं तथा सुलभं नास्ति । अस्माकं पुरतः बहवः उपहुतयः सन्ति । अस्याः प्राचीनता एव महती उपहुतिर्वर्तते । अधु इकानि बहूनि पदान् इ अस्यां भाषायां नैव सन्ति । तर्हि बिन्दुरूपेण अस्याः भाषायाः काः उपहुतयः सन्तीति अवलोकयामः ।

**संस्कृतशिक्षणस्य उपहुतयः –**

संस्कृतभाषाशिक्षणस्य परमं प्रयोजनं भावग्रहणं, भावव्यक्तीकणं च वर्तेते। भाषाज्ञाने संस्कृतमाध्यमेन संस्कृतशिक्षणम् इत्येव उपायो वर्तते। संस्कृतशिक्षणस्य समस्यासमाधानाय उत्तरदायित्वं सुमहदस्ति। अद्य संस्कृतशिक्षकाणां समक्षं बहुनि काठिन्यानि सन्ति। केचन बिन्दवः अत्र प्रदर्शिताः।

* संस्कृतं सर्वेषां व्यवहारिकभाषा नास्ति।
* आधुनिक भारते संस्कृतशिक्षणस्य आवश्यकता।
* जनसामान्य भाषा सरल ग्रन्थानाम् अभावः।
* मानवानां आध्यात्मिक भावना चिन्तनशक्तिनां विकासः।
* मानवस्य सुन्दर व्यक्तित्व निर्माणये विकासः।
* मानवानां उत्तम चरित्र निर्माणम्।
* भारतीय पारम्पारिक शास्त्राणां अध्ययनाय ज्ञानायश्च।
* संस्कृति परम्पराया संरक्षणाय।
* समाजै नैतिक मूल्यबोधाय प्रचार-प्रसारः।
* राष्ट्रे तथा देशे जनानां एकता सूत्रेण बन्धनाय।
* वेदानां मन्त्राणां च शुद्धोच्चारणाय अध्ययनाय च।

**उपसंहार : -**

संस्कृतभाषा वैज्ञानिकभाषा वर्तते। संस्कृतस्य व्याकरणं वैज्ञानिकं विश्व प्रसिध्दं च वर्तते। यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित् इत्युक्तरीत्या संस्कृतभाषायां किं नास्तीति प्रश्नः एव वरम्। सर्वासां भाषाणां जननीति कथ्यमाना एषा भाषा सर्वोपकारिणी, सर्वमङ्गलदात्री, सद्बुद्धिप्रदायिनी, शान्तिदायिनी, मोक्षप्रदायिनी च वर्तते। आधुनिककाले अस्याः प्रचारः प्रसारश्च किञ्चित् कष्टदायकं वर्तते। परन्तु मनः अस्ति चेत् मार्गोऽप्यस्ति। सर्वे मिलित्वा सम्भूय संस्कृतमतुः सेवायां तत्पराः भवन्ति चेत् असम्भवं किमपि नास्ति। सर्वेषां कृते अस्याः शिक्षणस्यावश्यकता तु वर्तत एव। अतः सदा विजयति धरणीतलेऽस्मिन् सुरभारती देववाणीति शम्।

**********

**सन्दर्भग्रन्थाः –**

1. संस्कृतशिक्षणं नवीनप्रविधयश्च, प्रो. पतेह सिंहः, प्रो. च. ल. न. शर्मा, आदित्यप्रकाशनम्, जयपुरम्, २००८
2. संस्कृत शिक्षण में नवीन विधियां, डा. दया दवे, विनायक प्रकाशन, जयपुर, २०१०.
3. शैक्षिकप्रविधिः, डा. रमाकान्तमिश्रः, चौखम्बा सुरभारती प्रकाशनम्, २००६.
4. अन्तर्जालपुटानि (Websites)

# शिक्षणे अधिगममूल्याकलनयोः महत्त्वम्

सावरकरवर्गः

परियोजनाकार्यस्य मार्गदर्शकः

डॉ. कुमारः

परियोजनाकार्यस्य सदस्याः

1. प्रतिभा प्रियदर्शिनी होता 2. शकुन्तला पण्डा
3. फिरोज साहु 4. सीमाराणी हबोडा
5. ज्योतिर्मयी साहु 6. रविन्द्र प्रधान

**परियोजनाकार्यमुद्दिश्य किञ्चित्प्रास्ताविकम् –**

उत्तमोत्तमशिक्षकनिर्माणस्योद्देश्येन शिक्षाशास्त्रविभागे अधीयानानां छात्राध्यापकानां सर्वविध-कौशलविकासाय विविधप्रायोगिककार्यमायोजयामः परिसरेऽस्मिन्। तेष्वन्यतमं कार्यमिदं परियोजनाकार्यम्। अस्मच्छात्राः संस्कृतशिक्षणं प्राप्य विभिन्नप्रदेशेषु भविष्यति कार्यं करिष्यन्तीत्यतः आधुनिककाले बहुप्रचलितस्यास्य संस्कृतस्य आवश्यकतां ज्ञात्वा तया भाषया आधुनिकानां विषयाणां गवेषणात्मकपरियोजनां कृत्वा लेखमेकं सज्जीकुर्युः इति कार्यमिदं कारितम्। अत्र छात्राणां गणमेकं निर्माय तेभ्यः अधिगममूल्याकलनस्य विषये निबन्धलेखनकार्यं प्रादायि । अनेन तेषां गवेषणशक्तिः, लेखनसामर्थ्यम्, समूहे कार्यकरणम्, सङ्गणकस्य प्रयोगज्ञानम्, आधुनिकविषयाणां संस्कृतभाषया प्रस्तुतीकरणम् इत्यादीनां परिचयः भवति । कथमिदं कार्यं करणीयमिति सकालिकं सम्यग्मार्गदर्शनं प्राप्य सोत्साहं छात्राध्यापकाः स्वयमेव परियोजनाकार्यं कृत्वा समर्पितवन्तः इति वक्तुं मार्गदर्शको भूत्वा मे चेतः नितरां तुष्यति । अनेकान् ग्रन्थान्नवलोक्य विषयसङ्ग्रहं कृत्वा स्वकीयभाषया छात्राध्यापकानां गणोऽयं लेखमिदं विलिख्य प्रकाशनयोग्यं चाकरोदिति सन्तोषं शुभकामनाः वदामि।

**प्रस्तावना -**

शिक्षणप्रक्रियायां शैक्षिकोद्देश्यानां लक्ष्यप्राप्तये विद्यार्थिभिः अर्जितज्ञानकौशलानां मापनाय मूल्याङ्कनस्य प्रयोगः भवति। मूल्याङ्कनेन छात्राणां ज्ञानात्मक, भावात्मक, तथा च मनोशारिरीकादिनां पक्षाणां निर्धारणं क्रियते । मूल्याङ्कनम् एका सततप्रक्रिया भवति। अस्मिन् परिमाणात्मकं तथा गुणात्मकं उभयोः सूचनाः प्राप्यन्ते। मूल्याङ्कनं पृष्ठपोषणदानस्य कार्यमपि करोति। येन शिक्षकः स्वीयशिक्षणप्रक्रिया - शिक्षणविधि - पाठ्यवस्त्वादिस्तरेषु संशोधनाय प्रयतते । शिक्षणक्षेत्रे मूल्याकलन इति पदस्य अर्थः सूचनानां एकत्रीकरणप्रक्रिया भवति । आकलनप्रक्रियायां प्रदत्तकार्यस्य प्रदर्शनस्य परीक्षणं क्रियते । आकलनं विना छात्रेषु विकासः जायते वा न वा इति विचारं कर्तुं न शक्यते । छात्राणाम् अधिगमस्तरवर्धनाय तथा च परामर्शनाय सततम् आकलनं क्रियते।

**किं नाम शिक्षणम् ?**

शिक्षणं निरन्तरं जायमाना काचित् प्रक्रिया वर्तते । अध्यापकनिष्ठज्ञानं छात्रेषु सङ्क्रामयितुं सम्प्रेषणात्मकप्रक्रिया एव शिक्षणम् अस्ति । शिक्षणं नाम सततं प्रवर्तमाना काचित् सामाजिकप्रक्रिया ।

प्रत्येकस्मिन् देशे तत्रत्यशासनव्यवस्थायाः सामाजिकदर्शनस्य सामाजिकपरिस्थितीनां तदीयमूल्यानाञ्च प्रभावः शिक्षणे दृश्यते। शिक्षणमित्यस्य आग्ङ्लभाषायाः ''Teaching'' इति पदं संस्कृतपर्यायपदम्।

**शिक्षणस्य परिभाषा-**

- ड़मविल् महोदयानुसारं - शिक्षणस्य सामान्यार्थस्तावत् शिक्षकः यत् जानाति तच्च सः छात्रान् कथयति।
- डी. बी. ओ. स्मिथ् महोदयानुसारं – "शिक्षणं क्रियाणां तादृशी काचित् व्यवस्था या अधिगमम् उत्पादयितुं प्रेरयति।"

**मूल्याङ्कनम् (EVALUATION)**

मूल्यस्य अङ्कनम् = मूल्याङ्कनम्। परीक्षणम् (Test), मापनम् [Measurement], मुल्यनिर्णय इत्यादीनि पदानि परस्परपूरकरुपेण उपयुज्यन्ते। किन्तु एतानि सर्वाणि अर्थव्याप्तौ भेदयुक्तानि सन्ति। एतेषां सर्वेषां पदानाम् अर्थव्याप्तौ समानता न भवति। व्यक्तेः अथवा वस्तुनः परिमाणात्मकमूल्यस्य परिगणना अथवा गणितीयं व्याख्यानं शक्यम्। मूल्याङ्कनम् एवं व्याख्यायते यथा -

- उपलब्धेः संख्यात्मकविवरणम्।
- योग्यतानां गुणात्मकविवरणम्।
- व्यक्तेः उपलब्धेः, योग्यतायाश्च निर्धारणम्।

मापनम् एकस्य वस्तुनः आङ्किकं रुपम् अस्ति। मूल्याङ्कनम् वस्तुनः मूल्यं निर्धारयति। मानवजीवने प्रत्येकस्मिन् क्षेत्रेऽपि मूल्याङ्कनस्य वैशिष्ट्यं वरीवर्ति। मानवः प्रतिदिनं ज्ञात्वा वा किमपि ज्ञानम् अधिते, अधितस्य अनुप्रयोगं च करोति। अधितं ज्ञानम् अस्मद् व्यवहारं परिवर्तयति। परिवर्तनमिदम् अस्मदुद्देश्यं पुरयति न वा? अस्मल्लक्ष्यं गमयति नवेति मूल्याङ्कनात् स्पष्टं ज्ञायते। सम्बन्धितमापन्या अनुमेया काचित् सततं प्रक्रिया मूल्याङ्कनम्। सा निरन्तरं प्रचलति। यथा एकः वैद्यः विभिन्नाभिः परीक्षाभिःवातपितकफादीन् सम्परीक्ष्य रोगस्य निर्धारणं करोति। तत्र विभिन्नाः परीक्षाः रोगनिर्धारणे मापन्यः भवन्ति। मापनीनाम् आधारेण रोगस्य निर्णयः क्रियते , तन्मुल्याङ्कनमिति कथ्यते। अत एव सम्बन्धितमापन्या अनुपमेया काचित् सततप्रक्रिया मूल्याङ्कनम्।

**मूल्याङ्कनस्य परिभाषा –**

- रेमर्स एवं गेज - मूल्याङ्कनस्य विषये व्यक्तेस्तथा समाजस्य तदुभयोः वा दृष्टौ यदपेक्षितं यद्योग्यं च वर्तते तस्यैवानुप्रयोगः मूल्याङ्कने क्रियते इति भणतः।
- कोठारीआयोगेन मूल्याङ्कनम् एका अनवरतप्रक्रिया यां संपूर्णशिक्षाप्रणाल्या: केवलम् एकम् अभिन्नम् अङ्गमिति अधुना परिगण्यते, अपि च शैक्षिकोद्देश्यै: सह अस्य घनिष्ठ: सम्बन्ध: वेविद्यते इति।

**मूल्याङ्कनप्रक्रिया (Evaluation process)**

राष्ट्रियशैक्षिकानुसन्धानप्रशिक्षणपरिषद: (१९६२) अनुसारेण मूल्याङ्कनं काचित् निरन्तरप्रक्रिया

भवति । यस्या: शिक्षणोद्देश्यानि अधिगमादुत्पन्नानुभवा: व्यवहारपरिवर्तनमिति त्रय: अंशा: महत्वपूर्णा: वरीवर्तन्ते ।

**१. उद्देश्यानां निर्धारणम्**

१. सामान्योद्देश्यानां निर्धारणं परिभाषीकरणम्।

२. विशिष्टोद्देश्यानां निर्धारणं परिभाषीकरणम्।

**२. अधिगमानुभवानां प्रदानम्**

१.शिक्षणबिन्दूनां चयनम् ।

२.अधिगमोपयुक्तक्रियाणां चयनम् ।

व्यवहारपरिवर्तनानाम् आधारेण मूल्याङ्कनम् । छात्रव्यवहारपरिवर्तनानां मूल्याङ्कनं परिणामेषु प्रतिपुष्टिः । उद्देश्यकेन्द्रियशिक्षाया: निर्माणमेव मूल्याङ्कनस्य मुख्यं लक्ष्यम् ।

**मूल्याङ्कनस्य प्रकाराः –**

मुख्यरूपेण मुल्याङ्कनं द्विविधं भवति यथा –

**1. आन्तरिकमूल्याङ्कनम् -**

आन्तरिक मूल्याङ्कनं शैक्षणिकसत्रे कृतानां सर्वेषां कार्याणां दैनिक-गतिविधिनाञ्च परीक्षणम् । एतादृश मुल्याङ्कनम् अत्युत्तमं भवति । आन्तरिकमूल्यांङ्कनं छात्राणां दैनिकप्रगतिः गृहकार्यं विभिन्नसाहित्यिकेषु कार्यक्रमेषु प्रदर्शितं कौशलं सामयिक परीक्षणां परिणामञ्चश्रित्य भवेत् ।

**2. बाह्यमूल्याङ्कनम्-**

बाह्यमूल्याङ्कनं विद्यालयै: शैक्षिकसंस्थाभि: विश्वविद्यालयैश्च आयोजिता परीक्षा द्वारा भवति । एतासु परीक्षासु छात्रेभ्य: लिखितानामुत्तराणां, कृतस्य कार्यस्य च आधारेण अङ्कानां वितरणं क्रियते ।

**मूल्याङ्कनस्य साधनानि -**

सामान्यतया मूल्याङ्कनाय निम्नलिखितसाधनानामुपयोगः क्रियते । तद् यथा –

१.निबन्धपरीक्षा २. वस्तुनिष्ठपरीक्षा ३. मैखिकपरीक्षा ४. प्रश्नावली ५. जीवनोतिहासविधि: ६. साक्षातकार: ७. परिशीलनपट्टीका: ८. मापनपट्टिका: ९. बुद्धिपरीक्षा १०. निदानात्मकपरीक्षा ११. अभिरूचिपरीक्षा १२. प्रायोजनाप्रविधय: १३. आसक्तिपरीक्षा चेति ।

**मूल्याकलनम् -**

मूल्याकलनं बालकानाम् अभिव्यक्ति-क्षमता-अनुभूत्यादीनां मापनं करोति । आकलनम् एका संक्षिप्तप्रकिया । आकलनम् एका संवादात्मकरचनात्मकप्रकिया । विद्यार्थीनाम् उचिताधिगमः भवति न वा मूल्याकलनमाध्यमेन शिक्षकः ज्ञातुं शक्नोति ।

**मूल्याकलनस्य अर्थः-**

मूल्याकलनमेका संवादात्मकरचनात्मकप्रकिया यया विद्यार्थीनाम् अधिगमः जातः न वा इति ज्ञातुं शक्नुमः । शिक्षकः मूल्याकलनमाध्यमेन ज्ञातुं शक्नोति । मूल्याकलनाय आकलनं मूल्याकलनम् ।

**मूल्याकलनस्य उद्देश्यानि-**

- मूल्याकलनस्य उद्देश्यं निदानात्मकं भवति।
- शैक्षिकसन्दर्भे मूल्याकलनस्य उद्देश्यं शिक्षणाधिगमकार्यक्रमे परिवर्त्तनम्।
- छात्राणां तथा अध्यापकानां कृते पृष्ठपोषणप्रदानम्।
- छात्राणाम् अधिगमसम्बन्धिकाठिन्यतादूरीकरणम्।
- मूल्याकलनाय आकलनम्।

**मूल्याङ्कनस्य महत्वम् -**

- मूल्याङ्कनं समुचितं शैक्षिकनिणर्याय अत्यन्तमावश्यकम्।
- मूल्याङ्कनस्य उद्येश्यं शैक्षिकोद्देश्यनां प्राप्तिः।
- मूल्याङ्कनं शिक्षणस्य प्रभावं सूचयति अथवा सङ्केतयति।
- मूल्याङ्कनस्य आधरेण पाठ्यक्रमे शिक्षणविधिषु सहायकसामग्रीषु आवश्यकपरिवर्तनं कर्त्तुं शक्यम्।
- मूल्याङ्कनम् अध्ययनरतान् छात्रान् अध्यापकांश्च प्रोत्साहयति।
- मूल्याङ्कनेन छात्राणां बुद्धिः, अभिरूचयः, अभिक्षमताः, कौशलानि, योग्यता दृष्टिकोणः इत्यादिव्यवहाराणां मापनं सम्भवति।

**मूल्याकलनस्य अवधिः** –

इयं प्रक्रिया सम्पूर्णतया शैक्षिकसत्रस्य अनुसारेण निरन्तरप्रचाल्यमाना प्रक्रिया। अस्यावधिः आवर्षं भवति। मूल्याकलनं शिक्षणशास्त्रस्य एकः भागः अस्ति यत् पठनपाठने प्रचलति।

**मुल्याकलनस्य महत्वम् -**

- मूल्याकलनं पाठ्यक्रमस्य समाप्तेः अनन्तरं भवति।
- निश्चितसमयान्तराले भवति। यथा मासिक-अर्धवार्षिक-वार्षिकादि।
- मूल्याकलनम् अध्ययनरतान् छात्रान् अध्यापकान् च प्रोत्साहयति।
- मूल्याकलने छात्राणां बृद्धिः, अभिरूचयः, अभिक्षमता, कौशलानि, योग्यता, दृष्टिकोणः इत्यादिव्यवहाराणां मापनं भवति।
- मूल्याकलनम् एका संवादात्मक तथा रचनात्मकप्रक्रिया वर्तते।
- अधिगमस्य परीक्षणम् अनेन सम्भवति।

**मूल्याकलन - मूल्याङ्कनयोर्भेदः**

**मूल्याकलनम्** –

1. मूल्याकलनम् एका संवादात्मकरचनात्मकप्रक्रिया अस्ति।
2. मूल्याकलनप्रक्रियया विद्यार्थीनाम् उचिताधिगमः जातः नवेति शिक्षकःज्ञातुं शक्नोति।
3. मूल्याकलनस्य उद्देश्यं निदानात्मकं भवति।
4. शैक्षिकसन्दर्भे मूल्याकलनस्य उद्देश्यं शिक्षणाधिगमकार्यक्रमे परिवर्त्तनं भवति। छात्राणामध्यापकानां च

कृते पृष्ठपोषणप्रदानम्।

5. मूल्याकलनं शिक्षणशात्राणां भागः अस्ति। यत् पठन-पाठनस्य समये एव प्रचलति।

6. मूल्याकलनं सम्पूर्ण शैक्षिकसत्रावधिमाधृत्य अनुसारेण निरन्तरप्रचलिता प्रक्रिया अस्ति।

7. क्षमतानां संवादात्मकविवरणम्।

**मूल्याङ्कनम्-**

1. मूल्याङ्कनम् एका योगात्मकप्रक्रिया अस्ति।
2. मुल्याड्कनप्रक्रियया अध्यापकः पूर्वनिर्मितशौक्षिककार्यक्रमः अथवा पाठ्यक्रमस्य समाप्त्यनत्तरं छात्राणां शौक्षिकोपलब्धिं ज्ञातुं शक्नोति।
3. मूल्याङ्कनस्य उद्देश्यं मूल्यनिर्णयः अस्ति।
4. शैक्षिकसन्दर्भे मूल्याङ्कनस्य उद्देश्यं यत् निर्धारितं, पाठ्यक्रमस्य समाप्त्यनन्तरं छात्राणाम् उपलब्धिम् अङ्कम् अथवा ग्रेडमाध्यमेन प्रदर्शितम्।
5. मूल्या शाश्त्राणां भागः अस्ति। यतः पठन-पाठनस्य अन्त उपलब्धीनां वर्गीकरणं भवति।
6. मूल्याङ्कनं पाठ्यक्रमस्य समाप्तेः अनन्तरं भवति।
7. उपलब्धिः संख्यानामकविवरणम्। योग्यानां गुणात्मकविवरणम्।

**उपसंहारः -**

परियोजनायामस्यां शिक्षणस्यार्थं प्रतिपाद्यं, तस्य परिभाषाः प्रतिपादिताः। तदनु मूल्याङ्कनस्य परिभाषा-प्रक्रिया-प्रकार-साधन-अवधिमहत्त्वादीनां प्रतिपादनपुरस्सरं मूल्याङ्कन-मूल्याकलनयोर्भेदः प्रदर्शितः । अत्रापि मूल्याकलनस्यार्थः तथा च उद्देश्यानि वर्णितानि । अनेन स्पष्टं भवति यत् शिक्षणप्रक्रियायां मूल्याङ्कनमूल्याकलनयोः महत्त्वं विद्यते। छात्राणाम् अधिगमविकासाय मुल्याङ्कनम् अपरिहार्यं भवति। एवं हि छात्राणां सर्वविधगतिविधिषु उत्तरोत्तर-विकासाय आकलनं करणीयम्। अतः छात्राणां शिक्षणक्रियायां विकासकरणे तथा च तेषां गतिविधिषु स्तरनिर्धारणाय मूल्याङ्कनमूल्याकलनयोः आवश्यकता वर्तते।

**********

**सन्दर्भग्रन्थाः –**


1. अधिगम के लिए आकलन, डा. महेश भार्गव एवं डा. ऋतु नारंग, रखी प्रकाशन प्रा. लि., आगरा, २०१७
2. Assessment for Learning, Prof. A. Ramakrishna, Prof. T. Mrunalini, Dr. D. Sunitha and Dr. P. Shanker, Neel Kamal Publications Pvt. Ltd., Hyderabad, 2019.
3. शैक्षिक आकलन, बी. एड. पाठ्यक्रम, दूरस्थ शिक्षा विभाग, महात्मा गन्धी अन्ताराष्ट्रिय विश्वविद्यालय, वर्धा.